द्रुते प्रासादिकीनां तु द्रुत चो(चौ)घ च वादयेत् ।
एव ध्रुवाणां कतव्य वाद्य प्रकरणान्वितम् ॥१७७॥

मात्राशकविकल्पस्तु ध्रुवापादेषु यो भवेत् ।
स तु माण्डेन कतव्यस्तज्ज्ञंगतिपरिक्रमे ॥१७८॥

एव गतिप्रचारेषु कार्यं वाद्य प्रयोक्तृभि ।
ताण्डवे सुकुमारे च वाद्य वक्ष्यामि तत्त्वत ॥१७९॥

प्रमाण्डमेक गानस्य परिवर्तं प्रयोजयेत् ।
तस्या(षा)न्त सन्निपाते च कार्यो माण्डग्रहो बुधैं ॥१८०॥

प्रयथा नृत्तशोभायमङ्गाना परिवर्तनम् ।
सङ्गीतस्य प्रकतव्य लयस्य च निवर्तनम् ॥१८१॥

यत्राभिनेयमङ्ग तु तत्र वाद्य प्रयोजयत् ।
यत्र पाणिवशादङ्ग भूयो भूयो निवर्तते ।
स तत्रार्थोऽभिनेयस्तु ज्ञेय नृत्तेन योजयेत् ॥१८२॥

---

द्रुतासु प्रासादिकीषु द्रुतलयेनो(नौ)घन । (प्रकरणति) प्रकरीमुद्धतमसृणादि सयुक्त विचार्यत्यय ॥१७७॥

प्राधान्येन ध्रुवासु तत्त्वम् । तत्राऽपि तत्त्वाऽकम्ध्य लयसममक्षरसम च प्रधानमिति दशयति । मात्राशकविकल्पस्त्विति ॥१७८॥

एतत्त्वयविषयप्राधान्येनोक्तत्वान् नृत्तप्राधान्यमाह । ताण्डवे सुकुमारे चेति ॥१७९॥

प्रमाण्डमेकमि यदि । .. तदन्यत्र प्रयोगक्रमसम्पत्तय तूदितम् । तथा चेति यदि चेत्यय ॥१८०॥

मङ्गादीनामपि सम्पिष्टकादीनाम् । प्रनतैकदुक्तम् । क्वचिदुपवतनादौ शास्त्रोक्तमेव परिवतनम् । क्वचिदनुक्तमपि नृत्तशोभार्थं क्रियत इति । प्रत एव सकलस्यापि गीतस्य वस्तुप्रायस्य त्वविलम्बितादेर्गीतशोभाय पुनरावृत्तिभवतीति । सङ्गीतस्येति । साकल्यऽव्ययीभाव ॥१८१॥

एव स्थिते प्रकृते किमित्याह ।

यत्राधीने त्वभिनय(त्राभिनेयमङ्गे तु) तत्र वाद्य प्रयोजयेत् ।

इति ॥१८२॥

यद्वृत्तं तु पदं गाने तादृशं वाद्यमिष्यते ।
गीतवाद्यप्रमाणेन कुर्याच्चाङ्गविचेष्टितम् ॥१८३॥

यथा गुर्वक्षरं चैव तथाल्पाक्षरमेव च ।
मुखे सोपोहने कार्यं प्रकृतेर्वर्णतस्तथा ॥१८४॥

स्थिते शुद्धप्रहारं तु मध्येऽक्षरसमं तथा ।
कार्यं तु गीतके वाद्यं द्रुते चोपरिपाणिकम् ॥१८५॥

समं रक्तं विभक्तं च तथा शुद्धप्रहारजम् ।
नृत्ताङ्गग्राहि च तथा वाद्यं कार्यं तु ताण्डवे ॥१८६॥

सनृत्तेषु प्रयोगेषु तत्त्वं ह्यनुगतं तथा ।
अनृत्तेषु प्रयोगेषु तत्त्वमोघं क्रमेण तु ॥१८७॥

स्थिते मध्ये द्रुते चापि यथा गानं तु गीयते ।
तथा नृत्ताङ्गहारेषु तेन चैव क्रमेण तु ॥१८८॥

---

ननु नास्ति न(य)त्र वाद्यमिति सम्भवमात्र यत्र वाद्यम् । न तु प्रधानमित्युक्तम् । तस्य विधिमाह । यद्वृत्त तु पद गाने तादृश वाद्यमिति । यतश्चेद सम्पाद्यत इत्याशङ्क्याह ।

गीतवाद्यप्रमाणेन कुर्यात् स्वाङ्गविचेष्टितम् ।

इति ॥१८३॥

गुर्वक्षरैरेव वाद्यम् । इद हि गीतकयोगेनावृत्त भवति । मुखोपवहनम । सम्मुख तत् । यदा प्रकृतेति यदा भावमपेक्ष्य वर्ण्यत इति ॥१८४॥

वर्णाङ्गात्मकगीतिभागमपेक्ष्य स्थित विलम्बितलय भवति । तदा शुद्धजातिगतै. प्रहारैर्वाद्यम् । यदा मध्यन्यस्तवाक्षरसमम् । यदा द्रुतलयस्तदोपरिपाणिक कार्यमिति सम्बन्ध ॥१८५॥

सङ्क्षिप्याह । सममित्यादि । एतत्तुरीये (अ० ना० ४ २६७) व्याख्यातम् ॥१८६॥

प्रकृतलक्षणमाह । सनृत्तेष्विति । नृत्तप्राधान्ये तत्त्वमनुगत च । तदभावे तत्तत्स्वरूपोन्मीलकमन्तमोघ ॥१८७॥

यो विधिर्गानवाद्यानां पदाक्षरलयान्विता(त) ।
स तु नृत्ताङ्गहारेषु कर्तव्यो नाट्यमोक्तृभिः ॥१८९॥

एतास्तु जातयः प्रोक्ता दश चाष्टौ च माण्हजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रकारान् वाद्यसंश्रयान् ॥१९०॥

तद्यथा । चित्र समो विमक्तश्चिन्न(च्छिन्न)श्छिन्नविद्धो विद्धो(द्धो) वाद्यसंश्रयोऽनुसृत प्रतिविद्धनो दुर्गोऽवकीर्णोऽर्धावकीर्णः परिक्षिप्त एकरूपो नियमान्वितः साचीकृत. समचैवश्चित्रलेखः सर्वसमवाय(य)कृतो दृढ इति ॥१९१॥

तत्र ।
रिखितोजकृतश्चित्रो नानाकरणभूषितः ।
प्रसन्नकरणं चैव त्रिपाणिलयसम्भवः ॥१९२॥

दर्वरपणवमृदङ्गैर्नानाकरणैः समनुयातः ।
तालाङ्गवेणुयुक्तः स तु विज्ञेयः समो नाम ॥१९३॥

---

यदीह तत् प्रधान तत्र तदनुसारि वाद्यमित्याह ।
स्थिते मध्ये द्रुते चापि यथा गानं तु गीयते ।
तथा नृत्ताङ्गहारेषु तेन चैव क्रमेण तु ॥

अथ ध्रुवापुष्कराध्यायद्वय(ये) (भ० ना० ३२ ३४) नाट्योद्देशेन यदुक्त तन्नृत्तेऽप्यतिदिशति । यो विधिर्गानवाद्यानामिति ॥१८९॥

जायत(तय) एव प्रयोगसमवायिन्य प्रधानाः । तासामेवेद प्रयोगेतिकर्तव्यता कथितेत्याशयेन ता एवोपसहरति । एतास्तु जातय इति । तुरप्यर्थ । न केवल स्वरजातयोऽष्टादश यावद्वाद्यजातय इत्यपि । अथ विशत्यलङ्कारयुतमिति निर्णेतुमाह । अत ऊर्ध्वमिति । प्रकृष्टता क्रियन्ते ये तेषु(क्रियते येषु ते) प्रकारा उत्कर्षहेतवोऽलङ्कारा इत्यर्थः । काव्यगानविषयताशङ्का शमयति । वाद्यसंश्रयानिति । वाद्य तावज् जात्यात्मकम् । तस्यैवोत्कर्षहेतव इत्यर्थ । आतोद्यान्तरमेलातिकृतो ह्युत्कर्ष ॥१९०॥

तानुद्दिशति । चित्रः समो विमक्तश्छिन्नश्छिन्नविद्धो विद्धो वाद्यसंश्रयोऽनुसृतः प्रतिविद्धतो दुर्गोऽवकीर्णोऽर्धावकीर्णं परिक्षिप्त एकरूपो नियमान्वित साचीकृतः समलेखश्चित्रलेखः सर्वसमवायकृतो दृढ इति ॥१९१॥

नात्यायतस्तया स्यादिह सास्थानस्थितो विभक्तश्च ।
प्रस्तरपाणिलयश्च च विभक्तकरणे विभक्तस्तु ॥१६४॥

वाद्यं द्रुतलयं यत्र सहसा विनिवर्तते ।
सर्वातोद्येषु भिन्नेषु प्रकारश्छिन्न एव स ॥१६५॥

अवपाणिमृदङ्गेषु पणवोपरिपाणिकः ।
यदा भवति वाद्येषु छिन्नविद्धस्त्वसौ भवेत् ॥१६६॥

शुद्धानुविद्धं यद्वाद्यं सर्वातोद्येषु दृश्यते ।
परस्परानुवेधेन सोऽनुविद्ध इति स्मृतः ॥१६७॥

मृदङ्गकरणे वाद्यं पणवानुगतं च यत् ।
सूचीविद्धैर्विचित्रैस्तु करणैर्विद्ध उच्यते ॥१६८॥

विशुद्धवाद्यप्रकृतिः समपाणिकृतस्तथा ।
स्वरूपानुगतश्चैव विज्ञेयो वाद्यसंश्रयः ॥१६९॥

---

सप्तम(मोऽ)लङ्कार इत्यर्थः ॥१६२-१६३॥

(नात्यायत इति) अत्राप्यरपाण्यादौ स्फुटो विभागः स विभक्तः । ... कार्य-स्वातन्त्र्य(न्त्य)मुक्त भागान्तर । एव सर्वत्र ॥१६४॥

वाद्यमिति । ... वीणादौ वाद्यमानेऽपि मुरजवाद्यस्य मध्ये तूष्णी-भाव । तदाह । भिन्नेष्विति । प्रविरमत्स्वित्यर्थः । स छिन्न ॥१६५॥

(ट)रवर्गमुक्तेषु मृदङ्गेषु पणव उपरिपाणिर्यत्रालङ्कारे स प्रथम मृदङ्गच्छेदश्चि(च्छि)न्नविद्ध ॥१६६॥

(शुद्धेति) आदौ शुद्धं तत आतोद्यान्तरेणानुविद्धं यत्र वाद्यम् । अनुविद्ध व्याचष्टे । परस्परानुवेधेनेति । सोऽनुविद्ध ॥१६७॥

मृदङ्गेति (मृदङ्गक्रियाया प्रयुक्ताया पणवा यदा वादयन्ति वाद्य कुर्वन्ति । विचित्रै सूचीविद्धैरिति । सूक्ष्मसूक्ष्मैरक्षरैर्मध्ये विभागो यदि करणं क्रिया-मिस्तन्मध्ये योऽसौ विद्ध ॥१६८॥

(विशुद्धेति) गीतमनुसरद्वाद्यसश्रय । वाद्यस्य गीतसत्रणमस्मिन्निति । स्वभावोक्तिश्चालङ्कार ॥१६९॥

सर्वातोद्यानि यत्रैकं करणं भावयन्ति तु ।
समवृत्तपदान्येवमेकरूप उदाहृतः ॥२०६॥

प्रशान्तनियमोपेतः स्फुटवाद्यसमन्वितः ।
उपयाति च गीतं यः स ज्ञेयो नियमान्वितः ॥२०७॥

विन्न हि करण यत्र वाद्येनैकेन वाद्यते ।
वृत्ताङ्गहारानुकृतो ज्ञेयः साचीकृतस्तु सः ॥२०८॥

कृत्वोपरिगत वाद्यं पणवो दर्दरोऽपि वा ।
प्रयान्ति मुरज यत्र समलेखः स कीर्तितः ॥२०९॥

चित्र बहुविधं वाद्यं मृदङ्गपणवादिभिः ।
क्रियते यत्र सर्वपैश्चित्रलेखः स उच्यते ॥२१०॥

सर्वमार्गगतो यस्तु सर्वपाणिलयाश्रयः ।
विचित्रश्च विमुक्तश्च तत्सम समवायितम् ॥२११॥

यस्तु मध्यलयोपेतः सम सुविहिताक्षरः ।
गतिप्रचारे विहितः प्रकारो दृढ एव स ॥२१२॥

एवमेते प्रकारास्तु कर्तव्या वाद्यसश्रया ।
गतिप्रचारे गीते वा रसभावानवेक्ष्य च ॥२१३॥

---

(सर्वातोद्यानीति)। सर्वैरातोद्यैरेकस्मिन् प्रयोगे निर्वाह्यमाणे एकरूपः ॥२०६॥

(प्रशान्तेति) प्रशान्तस्य गतिविरामस्य नियमननुवर्तमानो नियमान्वित ॥२०७॥

(चित्रमिति)। एकेनैव मुरजपणवदर्दरस्यान्यतमेन सर्ववाद्योचितान्यक्षराणि यदा प्रयुज्यन्ते तदाऽन्यस्य पराङ्मुखीकरणात् साचीकृत ॥२०८॥

(कृत्वेति)। यदेवमुरजेन वहनीयस्तदेवोपरिपाणिनेति प्रथम दर्दरेन पणवेन वा क्रियते पश्चात् मुरजेन यत्र न (स)समवर्णोल्लेखात् समलेख ॥२०९॥

(चित्रमिति)। प्रयमेवहि नानाक्षरत्वे चित्रत्व चित्रलेख. ॥२१०॥

(सर्वेति)। विमक्तरूपैर्मार्गैर्मिश्रीकृत्य सर्वसमवायकृत· सर्वसमवायितः ॥२११॥

(यस्त्विति)। स्वप्राधान्येन वर्तमानो मध्यमलयो येन तेन दृढ. ॥२१२-२१३॥

प्रकारा जानयश्चैव सर्वमार्गेषु संस्थिताः ।
ये वै गतिप्रचारेषु शुद्धास्ते केवला मताः ॥२१४॥

प्रयोगमिदानीं वक्ष्यामः । तत्रोपविष्टे प्राङ्मुखे रङ्गे कुतप एव विन्यासः कर्तव्यः । तत्र पूर्वोक्तयोर्नेपथ्यगृहद्वारयोर्मध्ये कुतपविन्यासः कार्यः । तत्र रङ्गाभिमुखो मौरजिकस्तस्य पाणविकदर्दरिकौ वामतः । एवं प्रथममवनद्धकेन तस्य ततः कुतपविन्यास उक्तः । तत्रोत्तराभिमुखो गायकः । गायकस्य तु वामपार्श्वे वैणिकः । वैणिकस्य दक्षिणेन वंशवादकौ । गातुरभिमुखं गायिका । इति कुतपविन्यासः ॥२१५॥

तत्र ।

प्रयोगेषु प्रणेतव्यो देशस्थानवशानुगः ।
यथास्थानस्थितेष्वेषु वामकातोद्यकेषु च ॥२१६॥

एवमचलाकम्पितास्खलितासन्नो(नो)पविष्टेषु मार्दङ्गिकदार्दरिकपाणविकेषु शिथिलाञ्चितवध्रस्तन्त्रितेषु यथाग्रामरागमार्जनालिप्तेषु मृदङ्गेषूरुद्वयनिपीडने तेषु निगृहीतार्थनिगृहीतमुक्तप्रका(हा)रकृतेषु दर्दरवादनविन्यस्तैर्देवतानामावाहनविसर्जनार्थं प्रथममेव तावत् त्रिसाम कर्तव्यम् ॥२१७॥

---

एवमुद्देशं परिसमाप्य प्रयोगे नाट्यपरिक्रमे जातिमार्गशुद्धे नृत्ते पुनरलङ्कारबाहुल्यमित्येतदाह । ये वै इति । प्रचारेष्विति ॥२१४॥

पूर्वरङ्गे तावत् प्रयोग दर्शयति । प्रयोगमिति । तत्र प्रत्याहार तावदाह । तत्रेति । रङ्गसामाजिकसङ्गमे प्राङ्मुखरङ्गपराङ्मुख उपविष्टे सति यवनिकादानपूर्वकं कुतपविन्यासः ॥२१५-२१६॥

तत्राहष्टसिद्धये करिष्यमाणस्य त्रिसाम्नामु(णत्रिसामो)पक्रमाय प्रथमं भाण्डानित्य परीक्षायाणीत्याह । (अचलेति) । अचले दृढे अकम्प्ये निष्क्रिये अस्खलिते उत्तानत एव आसने उपविष्टेषु मार्दङ्गिकादिषु शिथिलादिषु अञ्चितान्यायतानि वाद्यानि वध्राकोटनकल्पितस्वरे(ष्वि)त्यर्थः । यथा ग्रामरागमार्जनालिप्तेष्विति । ग्रामरागप्रयोग । तथा वाद्य जानीते । यथा ग्रामरागश्च गतिप्रधाने मार्जनासिद्धये यवादिचूर्णेषु लिप्तेषु । ऊरुद्वयेन समुत्पीडित तस्मिन् सति । मुक्तप्रहारेषु दर्दरेषु । तथा ऊरुद्वयेन पीडनशिथिल वाद्याणकस्य । किमित्युक्तम् । देवताना रङ्गे पूजितानामावाहनार्थं तन्त्रविसर्जनार्थं त्रिसाम ॥२१७॥

तत्र ।

> वामे चाग्रमसं साम तत् प्रीणयति पन्नगान् ।
> दक्षिणे आसजं साम तदृषीन् प्रीणयत्यथ ॥२१८॥
>
> उदीच्यामपि चाग्नेयं तद्वृहद्देवतानि च ।
> त्रिसाम कीर्तितं सम्यक् त्रिसामत्वाद्बुधैरथ ॥२१९॥
>
> त्रिप्रकारं त्रिगुणितं तथा चैवाद्विरताश्रयम् ।
> त्रिकलं षट्कलं चैव त्रिसाम परिकीर्तितम् ॥२२०॥
>
> त्रिसामाक्षरपिण्डस्तु गुरुलघ्वक्षरान्वितः ।
> यकारश्च मकारश्च त्रिकैस्त्रिगुणितं भवेत् ॥२२१॥

समुदायस्तदपेक्ष( त्रिचा सामम् )। त्रिचा दिग्ले भ्रष्टं प्रथम साम । त्रिचा भ्रष्टं दिग्ले द्वितीयम् । तिच(त्रिचा)भ्रष्टं भ्रष्टं तृतीयमिति । तदन्ते पूर्वरङ्ग-विधानमनुप्राप्य छन्दःसमेनाक्षरसमेन वा वाद्येन बहिर्गीतविधानमनुवर्तितव्यम् ।

---

तत्र वाम इति । गीयतीति । दक्षिण इति । नयेन । आसज ब्रह्मजालम् । ऋषींस्तर्पयति संगायतीति ॥२१८॥

आग्नेयं वह्निमुखवत् । तत्सर्वदेवतातर्पणम् । त्रीणि सत्त्वपूर्वं विसर्जनम् । क.. ...स्यत्रेति त्रिसाम । तदाह । त्रिसामत्वादिति ॥२१९॥

एक एव गुरुलघुसन्निवेशोऽक्षरवैचित्र्यान्निभिद्यते । तदाह । त्रिप्रकारमिति । क्रमेणात्र द्रुतादीत्याह । त्रिगुणितमिति । वाद्यविधिमाह । अद्विरताश्रयमिति । स्वरूपं तस्य त्रिकलं षट्कलम् । तालस्तु त्रिकलः ॥२२०॥

तान्यक्षराण्याह ।

> त्रिसामाक्षरपिण्डस्तु गुरुलघ्वक्षरान्वितः ।

इति । गुरुलघुविभागमाह । यकारश्च मकारश्च त्रिकैस्त्रिगुणितमिति । यत एवं त्रिका ॥२२१॥

समुदाय इति । तदपेक्ष त्रिकैरिति बहुवचनम् । ति(त्रि)चा साममिति । तद्द्वयमक्षरपरिवृत्त्या त्रीन् भेदानाह । .....त्रिपद् चाह । अजम्लेति स्वरवारम् । भ्रष्टम् । यस्य त्रिसाम्नोऽन्ते विधिमाह । तदन्त इति पूर्वरङ्गविधिमाह । प्राप्येति । मनुकृताया वाद्यविधौ । बहिर्गमनमाश्रवणादावुक्तम् । तद्वाद्येन गुरुलघुयोगादनु-

आसारितप्रयोगे च तस्यानुगतप्रायं वाद्यं विधातव्यम् । यत्र त्रिसाम स प्रत्याहाराय (रो यो) चासावचनीर्णकोटी त(टिस्त)त्र वाद्य प्रवर्तते । तत्रादौ तावद्वामोर्ध्वक-प्रहारयुतं पश्चादालिङ्गनविमर्दनकरं गोपुच्छा च त्रिसामा विचित्रकरणयुत मार्दङ्गिकसर्वमार्ण्डिकमपि वाद्यं पश्चात् प्रवर्तनीयम् । पूर्वं हि भाण्डवाद्येन सिद्धिरुत्पादनीया । स्त्रीबालमूर्खाविकीर्णे च रङ्गे कुतूहलजननसमर्थवाद्यमुपपन्नं भवति ॥२२२॥

अपि च ।

आचार्याः समभिच्छन्ति पदच्छेदं तु पण्डिताः ।
स्त्रियो मधुरमिच्छन्ति विकृ(कु)ष्टमितरे जनाः ॥२२३॥

तस्य(स्यैव) चान्ते ताण्डवप्रयोगमधिकृत्य नर्तक्या अवतरणकाले लघुवर्ण-सञ्चयमङ्गिकोऽङ्गुलिप्रचलनप्राय वाद्य योज्यम् । गीतकसन्निपाते च लास्या(स्य)-मनुवाद्यम् । तेन नृत्ताङ्गहारानुगत करणवाद्य प्रयोज्यम् । आलिप्तमार्गेण जातिकरणान्वितमुत्थापने वाद्यं प्रयोक्तव्यम् । तत. पर परिवर्तन चातुर्मार्गिक शुद्धजात्याश्रय चतुर्थकारप्रवेशेषु वाद्यमङ्गुलिप्रचलनप्रायमिति । नान्दीशुष्कावकृष्टासु करणाश्रित वाद्य योज्यम् । रङ्गद्वारे प्ररोचनाया चर्चरे त्रिगते चार्यां चाङ्कित-

---

सरणीयम् । ननु प्रत्याहारस्तु लक्षणमकृतम् । कृतमित्याह । यथान(या चासाव)-चतीर्णकोटिस्तत्र वाद्यमिति । अवतरणस्य मार्गेऽन्तरसवमार्गमिश्रवाद्यम् । अन्ये तु यावदवतीर्णकोटिकोटीति पठन्तस्त्रिसामावतरणयोर्मध्ये सर्वभाण्डे वाद्यमिति मन्यन्ते । तत्र हेतुमाह । पूर्वं हीति । सिद्ध(द्धि)र्व्याचष्टे । स्त्रीबालेत्यादिना । कुतूहलजननमेव सिद्धि प्रधानमित्यर्थः ॥२२२॥

आचार्या एतत्तत्त्वविद. । पण्डिताः वैय्याकरणादयः । स्त्रिय इति यत्र मधुरम् । इतरे बालमूर्खादयो विकृष्टन्ति(मिति) प्रतिवृत्तम् ॥२२३॥

तस्यैवेति । बहिर्गीतोत्तेजितस्य वाद्यस्यान्ते । तु गीते । अङ्गुलिप्रचलनप्राय-मिति । पतीतप्रायमित्यर्थः । गीतप्रयोगाभिनये समाप्ते तदन्यसन्निपातात् प्रभृति लास्यनृत्यमनुगतवाद्य करणधातुयुक्तवीणामिथम् । अन्ये तु कृतादिषट्कमत्रेत्याहुः । एवमुत्तरत्र । उत्थापने त्वालिप्तमार्गोचितजातिक्रियावाद्यम् । परिवर्तिन्यां सर्वमार्गेषु शुद्धाया जात्या करणाश्रितमिति । चातुर्थिक सन्निपाताक्षरयोजना.........

मार्गाश्रितं सन्निपातग्रहं प्रयोक्तव्यम् । महाचार्यां वितस्तिमार्गाश्रितं प्रदेशिनीग्रहम् । एवं तावत् पूर्वरङ्गे भाण्डवाद्यमुक्तम् । नायकानां तु स्वस्थगतिप्रचारं वक्ष्याम । तत्र धद्रांद्रांद्रां इति देवतानाम् । घेंतांकेंतां, कृणकिटिप्रायं विप्राणाम् । व्यञ्जनप्रायं मध्यमानाम् ॥२२४॥

एवं स्वस्थावस्थागतिप्रचारे विधीयते वाद्यम् ।
द्विकलाश्च तथैककलाश्चतुष्कलाश्चैव पादविन्यासाः ॥२२५॥

तत्र तु साम्यं कार्यं भाण्डे च समं च गानेन ।
पुनरन्यावस्थाकृतं वाद्यं वक्ष्यामि त्वरितगमने ॥२२६॥

घघघेघेट इत्येवं वाद्यं प्रयोक्तव्यम् ।
स्पर्शविमार्जितमङ्गुलिप्रचलनकृतं विहितम् ॥२२७॥

(तत्रै)व पूर्वं सम्यग् लिखितं गतिप्रचारे तु ।
पुनरन्यावस्थायां वाद्यविधानं प्रवक्ष्यामि ॥२२८॥

त्वरितगमनेषु मात्रा ये पूर्वोक्ता गतिप्रचारेषु ।
घघघेंघेंप्रायं तत्र तु वाद्यं प्रयोक्तव्यम् ॥२२९॥

नीरसविमार्जनेष्वप्यानिलाङ्गानेऽङ्गुलीचलनात् ।
कार्यं हि तत्त्वलुप्तोऽप्यन्योन्यसमाश्रितं वाद्यमिति ॥२३०॥

दुःखार्दितव्यथितेष्टजनवियोगविमनानावयवश्च ।
व्रतनियमोपवासादियुक्तेष्वालिप्तमार्गो विधातव्यः ॥२३१॥

दैत्यदानवयक्षराक्षसपन्नगादीनां धद्रांधद्रांधकुताम् ।
घेघेटाप्रायं खञ्जविकलपङ्गुवामनादीनाम् ॥२३२॥

टघटाघेप्रायं चेटकुसत्वादीनां योक्टखुखणेंत्यादिकम् ।
यतिपाशुपतशाक्यादीनां पट्टपट्टघेघप्रायम् ॥२३३॥

---

स्येति । प्रदेशिनीपातेन यस्य ग्रहणं तत् प्रदेशिनीग्रहणम् । एवं पूर्वरङ्ग इत्युपसंहृत्य नायकविषयमाह । नायकानां त्विति । यद्यपि जातिविनियोगयोगो गतिप्रचारे कृतस्तथापि ग्रहमोक्षे सन्धानयोगा येता पक्षराणि तत्र मिश्रणीयानीत्येवं योजनामाह । अन्ये तु विकल्पमिच्छन्ति ॥२२४॥

गतिप्रचार इति गत्यध्याये (अ० १२) । चतुष्कल(ला) इति आङ्गिकमुखद्वये ऊर्ध्वकालिङ्गके ॥२२५-२३३॥

ग्रोपस्थापक निर्मुण्डवर्बरादीना
घेटांघोटामांटाण्णाणाप्रायम ।
वृद्धश्रोत्रियकञ्चुकिस्थूलादीना
खोंग्रोघोखोणो इति प्रायम् ॥
गजवाजिखरोष्ट्ररथविमानयानेषु खकिटिप्रायम् ॥२३४॥

सर्वत्रोत्तममध्यमाधमेषु पुरुषेष्विरय रसभावानभिसमीक्ष्य वाद्य प्रयोक्तव्यम् । एवं तावत् पुरुषवाद्यम् ॥२३५॥

स्त्रीणां पुनरभिध्यास्यामः । तत्रोत्तमस्त्रीणां मध्यामां च टोस्वमधिघो-घेंटमधिघे इति प्रायम् । अथ राजस्त्रीणां घकिह्लमधिधिवोह्लुकखुखुप्रायम् । घकि-हिकिघिघटमटमटमधिये इति ब्राह्मणीनाम । अथ मध्यमस्त्रीणां वेश्याशिल्पकारीणां किटिण्णाण घर्काघघटमधिट्टणाकिटिकिटिप्रायम । टमघिकुण (केवखुलिखि प्राय नीच स्त्रीणाम्) । एव तावत् सामान्यतोऽभिहित स्त्रीणाम । अवस्थान्तरितानां तु त एव पौरुषा वाद्यविशेषा भवन्ति । सामान्यतोऽभिनये भयशोकक्रोधादयो हि नाम्ना आसा समुत्पद्यन्ते । आसामपि रसभावाभिनयापेक्ष मार्गाश्रित वाद्य भवति ॥२३६॥

अपि च ।

जातिमार्गप्रचारैस्तु करणैरक्षरैस्तथा ।
वादयेद्यस्त्वसङ्कीर्णं स श्रेष्ठो वादको मत. ॥२३७॥

अथान्तरवाद्यानि । अनुबन्धो विप्रहारित सिद्धिर्ग(प्र)हण परिच्छिन्न-मिति ॥२३८॥

---

औपस्थापि(प)को........ .... ....प्रतिनट । निर्मुण्डो जातिखण्डितः ॥२३४-२३५॥

सामान्यतोऽभिनये सामान्याभिनये क्रोधादय. । आसां स्त्रीणाम् । यथादिष्टो वाद्यो दर्शिता इति । तदनुसारेण स्त्रीणामपि वाद्य न केवल पुंसाम् ॥२३६॥

जातय। शुद्धा या इत्यादि व्याख्यातम् ॥२३७॥

गानपरिक्रम च विना यद्वाद्य तदुत्तत(वन्त)रवाद्यम् । तच्चतुर्धा ॥२३८॥

तत्रानुबन्धसंज्ञमन्तरवाद्य यथा घोणाघोवलघे इति । पाठ्यविरामे विप्रहारित यथा घघांखोखोणा इति ॥२३९॥

सिद्धिरपि ।

ऐश्वर्ये विस्मृते शान्ते वस्त्राभरणसंभ्रमे ।
सिद्धिर्वादयितव्या तु नानाकरणसंश्रया ॥२४०॥

सा च सिद्धिर्यथा समागंकरणाश्रया कार्या विचित्रकरणा पञ्चकला । अवस्थान्तरे पुनरेवमेव कृता भवति ॥२४१॥

अपि (च)

साध्यविरामे वाद्यं परिचरसाधनकृते विरामे च ।
वस्त्राभरणनिपाते प्रकुर्यादम्यङ्गने काले ॥२४२॥

अथ परिच्छिन्नं सार्वभाण्डिकम् । ध्रुवायो(या) ग्रहोपशमने गम्भीर-धीरप्रहारमुद्धत यथारसं च षट्कलम् । तत्रोत्तमानां वितस्तमार्गाश्रित द्रंद्रंक्नेघेके इति ॥२४३॥

अथोत्तमस्त्रीणामड्डितावाद्याश्रयणम् । खो खो खा इति । अधमाना खञ्जनर्कुटकरथम् । यथा टेंकखाकिटिकिटिना इति ॥२४४॥

अथप्रासादिकीप्रावेशिक्याक्षेपिक्यवकृष्टासु । तत्र प्रासादिकीप्रावेशिक्योः समपाणौ विभक्तकरणं वाद्यम् । द्रुतायामुपरिपाणिविचित्रकरण स्थिताकृष्टाया-

---

अनुबन्धो नाम यदङ्गानुसारेणाभिनयं । मध्यम एव वर्तना । प्रयोगकाल-वाद्यम् । अध्यायसमापा(प्ता)ववान्तरवाक्यार्थच्छेदे विप्रहारितम् । यथा यत्नश्शेयता मित्यत्र विक्षेपेण प्रहारः ॥२३९॥

अथाद्भुतविभवलोभेऽभिनयपाठ्यादौ विधि स्मृत. सिद्धिः । पूरणार्थं सिद्धि-ग्रहणम् ॥२४०-२४२॥

ध्रुवगाने भविष्यति समाप्ते च यद्वाद्य ध्रुवावट्त्वपर्यन्तं नियतषट्कलत्वा-वधिकृतात् परिच्छिन्नम् । तदन्तरवाद्यमेवोत्तरवाद्यविषये अक्षरैर्विभजति । तत्रोत्त-मानामित्यादिना । ध्रुवाणां ग्रहणे उपशमने च यद् परिच्छिन्नं नाम चतुर्थमन्तर-वाद्यमुक्तम् ॥२४३-२४४॥

मर्वसन्निपातकृतमिति । यथा धोण्णेघोधो इति ॥२४५॥

एवमेतत् प्रयोक्तव्यं वाद्यं गतिपरिक्रमे ।

प्रासादिक्यां ध्रुवायां च त्वन्तरायां तथैव च ॥२४६॥

प्रमार्ज्जमेक गीतं तु परिवर्तं प्रयोजयेत् ।

सन्निपातावसानेषु भाण्डवाद्यग्रहो भवेत् ॥२४७॥

अथ द्रुतविलम्बितायां यथा । तलखो तलखो तलखो इति । अथाड्डितायां यथा । धोणखोखोणके... . कुखुणाणाणा खोदें बलखोंके इति ॥२४८॥

अथोद्घात्यम् ।

सम्भ्रमावेगहर्षार्थे विस्मयोत्साहशोकजे ।

ग्रहे गानस्य यद्वाद्यमुद्घात्यं सम्प्रकीर्तितम् ॥२४९॥

मोक्षमिदानीं वक्ष्यामः । तद्यथा । खेन्नातिरिठिदत्तकित्तकिकिदोलगोगोगघेवोघेटघेघेरावो इति । अ(अ)थाड्डितायाम् । घटमथिघघलोखोगखोखोगखोखो चेण डवकणिक्कपगुड्डप्प इति । अथ नर्कुटखञ्जयोः । योघद्राघद्रांतक्त्तिांगुटगुटु घे इति । अपस्थितायाम् । घघघेटमटघेरेत्यिमटाकटत्यिमटत्यि कटकिटोघिटी इति । अथावकृष्टायाम् । घटमटत्यिरयिगुटुघेट (धोणवघणणोणण) इति ॥२५०॥

एवमेते ग्रहा मोक्षा ध्रुवाणां गदिता मया ।

निष्क्रामे च प्रवेशे च त्वाक्षेपिक्यन्तरासु च ॥२५१॥

---

तत्र ग्रहे यद्वाद्य तदेव षड्ध्रुवाभेदेन स्फुटयितुमाह । अथ प्रासाद(दि)कीत्यादि ॥२४५-२४७॥

द्रुताया ध्रुवाया विप्रहारितस्य ध्रुवादिविषये नामान्तरेण प्रयोगमाह । उद्घात्यम् । उत्कृष्ट हनन यत्रेति ॥२४९॥

एवमुद्दीपनापरपर्याये ग्रहेऽभिधाय प्रशमनप्रलये मोक्षे दर्शयति । मोक्षमिदानीमित्यादिना ॥२५०-२५१॥

तत्रास्य द्वौ सहननौ । सञ्चरसहनन यत्र सयोगाक्षराणि बाहुल्येनान्यत्वासरणे समानुसरण प्रयतितव्यमिति यदुक्त तण्डुनाऽर्यवादेन तद् द्रढयितुमाह ।

अकालज्ञमतालज्ञमशास्त्रज्ञं च वादकम् ।

चर्मघातक इत्येव प्रवदन्ति मनीषिणः ॥

इति, शास्त्रज्ञत्व लक्षणज्ञता । तालज्ञता प्रयोगकौशलम् । कालो द्रुतादि । ताल-

एवं तालकलाज्ञाने मार्दङ्गिकेन प्रयतितव्यम् । भवति चात्र ।

अतालसमकालसमशास्त्रज्ञं च वादकम् ।
चर्मघातकमि( इ )त्येव प्रवदन्ति मनीषिणः ॥२५२॥

अनेनैवविधानेन कार्यं वाद्यं प्रयत्नतः ।
प्रथमानां नर्कुटखञ्जये(मे)दात् प्रयुक्त च वर्णान्तरिका ।
अत पर प्रवक्ष्यामि त्वालोद्यानां तु लक्षणम् ॥२५३॥

त्रिधा कृतिर्मृदङ्गानां हारीतकयवाश्रया ।
तथा गोपुच्छहृदया च भवन्त्येवां च रूपतः ॥२५४॥

हरीतका(वया)कृतिस्त्वङ्को यवमध्यस्तथोर्ध्वगः ।
आलिङ्गश्चैव गोपुच्छ आकृत्या सम्प्रकीर्तितः ॥२५५॥

तालत्रय तथार्धं च मृदङ्गोऽङ्किक इष्यते ।
मुख तस्य च कर्तव्य द्वादशाङ्गुलयोजितम् ॥२५६॥

ऊर्ध्वकोऽपि तथा कार्यश्चतुस्तालप्रमाणत ।
अङ्गुलानि मुख तस्य कर्तव्य तु चतुर्दश ॥२५७॥

आलिङ्गश्चैव कर्तव्यस्तालत्रयमथापि च ।
मुख तस्याङ्गुलानि स्युरष्टावेव समासतः ॥२५८॥

दैर्घ्येण पणवश्चैव कर्तव्यः षोडशाङ्गुल ।
कृशमध्याङ्गुलान्यष्टौ पञ्चाङ्गुलमुखस्तथा ॥२५९॥

---

चर्मवत्पुटादि । चर्म निहन्तीति जुगुप्सोक्ता ॥२५२॥

लक्षणमित्याकार ॥२५३-२५४॥

हरीतक्याकृतिरङ्कि( ङ्कि )कः ॥२५५॥

सार्धतालत्रयो द्वादशाङ्गुलक. ॥२५६॥

ऊर्ध्वाधो यवाकृतिश्चतुस्तालश्चतुर्दशाङ्गुलमुखाकार ॥२५७॥

आलिङ्गो गोपुच्छाकृति । त्रितालोऽष्टाङ्गुलमुख ॥२५८॥

दैर्घ्येण षोडशपरिणाहेनाष्टौ मुखत पञ्चाङ्गुल पणवः ॥२५९॥

प्रोष्ठावस्य तु कर्तव्यो तज्ज्ञैरप्यर्धमङ्गुलम् ।
मध्य च सुषिर तस्य चत्वार्येवाङ्गुलानि च ॥२६०॥
दर्दरश्च घटाकारो नवाङ्गुलमुखस्तथा ।
विधानं चास्य कर्तव्य घटस्य सदृश बुधै ॥२६१॥
द्वादशाङ्गुलविस्तीर्णं पीनोष्ठस्य समासतः ।
अतः परं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥२६२॥
न ज्वरोपहत चर्म न च काकमुखाहतम् ।
नापि दोषहतं क्लिन्न न च धूमाग्निदूषितम् ॥२६३॥
एभिर्दोषैर्विनिर्मुक्त चर्म निर्वर्तयेत गवाम् ।
शुद्धपल्लवसकाश हिमकुन्देन्दुपाण्डुरम् ॥२६४॥
प्रत्यामिषविहीन तु क्लिन्न वा चर्म कर्मणि ।
छिद्रैरेव सुवर्णानि चर्माण्याहृत्य बुद्धिमान् ॥२६५॥
शीतोदके निशामेका स्थापयित्वा समुद्धरत् ।
वध्रं मुललितैर्दात्रैर्गोमयैरवतमार्जि(र्वि)तं. ॥२६६॥
चन्द्रकैस्तनुभि पश्चात् मृदङ्गान् योजयेद् बुधः ।
पुष्पावस्ततं(तं त)र कुर्यात् त्रिवर्ति चन्द्रकाश्रया(य)म् ॥२६७॥

---

अङ्गु(ओ)ष्ठो यत्र चर्म विश्राम्यति । तेन सोर्ध्वो(र्धो)ङ्गुल्यमध्यतः । अङ्गुलद्वयस्थूल तु काष्ठमित्यर्थ ॥२६०॥

नवाङ्गुलमुखो द्वादशाङ्गुलसुषिरः पीनोष्ठो घटाकृतिर्दर्दर ॥२६१-२६२॥
अथ मुखोपयोगलक्षणमाह । न ज्वरोपहतमित्यादि ॥२६३-२६४॥

पूत गोमयेनोक्तास्तत सुमर्दिता ॥२६६॥

चन्द्रकैरिति । वध्रा निरवद्यास्तथा कार्या यथा चन्द्रकाकारा क्वचित् क्वचि-द्वृद्धकुसुमवर्तनाकारा । त्रिवर्तिमिति । त्रयाणा वध्राणामन्योन्ययोजनार्थैर्विन्यैर्ण ॥२६७॥

कक्ष्यास्य वै परिकरमिति । येन स्कन्धे निवेश्यत इत्येतत् पणववत् प्रवेश-येत् ॥२६८॥

कक्ष्याख्य वं परिकर ग्रीवाख्य स्वास्तिक तथा ।
त्रिशत च प्रकुर्वीत पुष्करे ह्यालिकानि तु ॥२६८॥
दश तत्र हि वध्रास्तु प्रक्षेप्या वर्तिसश्रयाः ।
द्व(द्वे)हित्वा त्वाक्षिके वध्र (ध्रे)तृतीये सप्रवेशयेत् ॥२६६॥
सर्वेष्वेव प्रयोगोऽयमाक्षिकेषु विधीयते ।
तन्त्रीभि. पणव नह्यो तु सुदृढाभिः समन्ततः ॥२७०॥
वातपुष्करिकां चैव योजयेत्तनुचर्मणा ।
एवं मृदङ्गपणवा कर्तव्या दर्दरास्तथा ॥२७१॥

नवे मृदङ्गे दालव्य रोहण सतत बुधै ।
गव्य घृत च तैल च तिलपिष्ट तथैव च ॥२७२॥
तथा ह्यनेन विधिना त्वाङ्गिकालिङ्गकोर्ध्वकान् ।
देवतास्यर्चन कृत्वा तत. स्थाप्या महीतले ॥२७३॥
चित्रायामथवा हस्ते शुक्लपक्षे शुभेऽहनि ।
उपाध्याय शुचिर्विद्वान् कुलीनो रोगवर्जित. ॥१७४॥

मतिमान् गीततत्त्वज्ञो मधुरोऽविक्लेऽन्द्रिय. ।
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रत ॥२७५॥

---

आक्षके साध्ये सति द्व वध्रे बन्धयित्वा स्वप्रान्तवध्रेषु मध्ये तृतीये वध्रे (प्र) वेशयेदिति पणवत्वम् ॥२६६॥

ततस्त्रिभिर्बध्नीयात् ॥२७०॥

वातपुष्करिकां चैव योजयेत्तनुचर्मणा ।

इति । घातदादर्य विनापि नध्वक्षरपवनवशादेव यथा मधुरसम्बादयो विचित्रा भवन्ति य(त)था कुर्यादिति ॥२७१॥

दालव्य रोहणमिति । येन चमणा(र्णो) वाद्य प्ररोहति तद् द्रव्यम् । घृत (त )तिलतैल तिलकल्क चेति । चर्मणि लेप ॥२७२-२७३॥

अथ मुरजपूजा यत्नेन कर्तव्य(व्या)माह । चित्रायामित्यादि । उपाध्याया-(य) इति । मौरजिक (क ) ॥२७४-२७६॥

मण्डलत्रयमालिप्य गोमयेन सुगन्धिना ।
ब्रह्माणं शङ्करं विष्णुं त्रिषु तेषु प्रकल्पयेत् ॥२७६॥

प्रालिङ्गं स्थापयेत् पूर्वं कृते ब्राह्मेऽथ मण्डले ।
उर्ध्वकं तु द्वितीयेऽस्मिन् रुद्रनाम्नि निधापयेत् ॥२७७॥

तिर्यग्गतलिङ्गकं सम्यग् वैष्णवे मण्डले क्षिपेत् ।
बलिपुष्पोपहारैस्तु पूजयेत् पुष्करत्रयम् ॥२७७॥

पायसं घृतमध्वक्तं चन्दनं कुसुमानि च ।
शुक्लानि चैव वासांसि दत्त्वा लिङ्गे स्वयम्भुवः ॥२७९॥

त्र्यम्बकाय प्रदातव्यः सगणायोर्ध्वके बलिः ।
स्वस्तिकैर्लाजिकापुष्पफलपिण्डाष्टकैः सह ॥२८०॥

उन्मत्तकरवीरार्कपुष्पैरन्यैश्च भूषितः ।
बलिः कार्यः प्रयत्नेन रक्तकौदुम्बरैः सह ॥२८१॥

वैष्णवे मण्डले स्थाप्य सर्वबीजगतोऽङ्कुरः ।
स्रावस्त्रालेपनं प्रीतैश्चहविश्च सपायसं ॥२८२॥

वाचयित्वा द्विजं स्वस्ति दत्त्वा पूर्वं च दक्षिणाम् ।
पूजयित्वाद्रिपर्वान् पश्चाच्छ्राद्धं समाचरेत् ॥२८३॥

दैवतानि च वक्ष्यामि येषां ते च भवन्ति हि ।
वज्रेक्षणः शङ्कुकर्णो प्रहस्त्वापि तथा महान् ॥२८४॥

एतास्तु देवता विप्रा पुष्करेषु प्रकीर्तिताः ।
मृण्मयत्वात् मृदङ्गा(ङ्गा)स्तु माण्ड भ्रमयतीति च ॥२८५॥

---

प्रालिङ्ग(ङ्गय)म् ॥२७०-२७८॥
स्वयम्भुवः ब्रह्मणा(णः) ॥२७९-२८०॥
उन्मत्त धत्तूरम् ॥२८१-२८३॥
वज्रेक्षणादयोऽत्र पूज्याः ॥२८४॥

अथ निर्वचनमाह । मृण्मयत्वात् मृदङ्ग इति । मुखे चेति मुख मङ्गलं च करोति । भाण्डम् । भस्य डा यादेशः । तदाह । भ्रमयतीति रसयतीत्यन्ये पठन्ति । एके मरण इति च माण्डमाहुः ॥२८५॥

मुरजास्तूर्ध्वकरणादातोद्यं तोदनादपि ।
भाण्डस्यादौ प्रणीतोऽत्र पणवश्च विधीयते ।
द्वार शब्द दारयति तस्माद् भवति दर्दरः ॥२८६॥
सृष्ट्वा मृदङ्गान् पणवं दर्दरं च महामुनिः ।
मेघैश्च स्वरसंयोगं मृदङ्गानामथासृजत् ॥२८७॥
विद्युज्जिह्वो भवेद्वामे मेघः स तु महास्वनः ।
ऐरावतो महामेघस्तथा चैवोर्ध्वके भवेत् ॥२८८॥
आलिङ्गके तडित्वांश्च नाम्ना चैव बलाहकः ।
दक्षिणे पुष्करो मेघः पुष्करो वामयोजितः (कोकिलो नाम विश्रुतः)
॥२८९॥
मृदङ्गश्चैव नाम्ना तु ऊर्ध्वके नन्द्ययोच्यते ।
अङ्किकः सिद्धिरित्येवमालिङ्गश्चैव पिङ्गलः ॥२९०॥
भूतप्रियो बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता ।
अपूजयित्वा ह्येतान् वै नैव प्रेक्षां प्रयोजयेत् ॥२९१॥

---

मुरजाः सर्वकरणादिषु मुरा(द् वेष्टनाज्)जाता मुरजाः । ऊर्ध्वकरणमुन्नत सौषिर्यं च । अन्ये तु मुजि(पा० धा० २५१)ज्जिनति विक्रम ध(मल्ल)रूपमूर्ध्वं समनुकुर्वन्तीति प्रातिपदिकाद् धात्वर्थे(पा० धा० १८१६)णिचि टिलोपे पचाद्यच् (अ० ३०१.१३४) मुरजा इत्याहु. । आतोद्य तोदनात् । भाण्डस्यादौ प्रणीतः पणव इति । तेनैव पूर्वं व्यवहाराद् भ(प)ण व्यवहारे (पा० धा० ४३९) द्रव्यनिचय । दर्दर. । तदाश्रयत्वाद् वाद्यमपि । नृणामन्ते(दृ विदारणे) यपचि रूपमित्युक्तमेव (३४-८४) ॥२८६॥

अथ मेघाना तत्राधिष्ठातृत्व सूचयन् पुराकल्पमाह । मेघैश्च स्वरसंयोग इ(मि)ति । मेघगर्जितेन हेतुना तत स्वरयोजनामाश्रित्य । पुष्करपत्रेस्तु वर्णा षोडशेति भाव ॥२८७॥

तेनोर्ध्वके चैरावत. । आलिङ्गेन वामेन निनाद ॥२८८॥

दक्षिणे त्वङ्किके कोकिल. ॥२८९॥

ऊर्ध्वके नन्दी । आङ्किके सिद्धिः । आलिङ्गे पिङ्गल· ॥२९०॥

इति परमेश्वरगणविशेषाधिष्ठानद्वारेण सूचयन् तेषामप्यत्र पूज्यत्वमाह । भूतान्यन्ताद् वैदलीयानि तर्पणमनुभावनीयानि । येन तामु.दली(तेषां प्रियो बलि·) ॥२९१॥

करीषस्य तु सङ्घाते मृदङ्गं स्थापयेद् बुधः ।
सुमन्या(ङ्घा)तानचलिता(ना)स्तथा च(चा)पतिता(न)पुनः ॥२९२॥

आतोद्यपणवैश्चैव नतकोपनतास्तथा ।
शान्तिकर्म प्रयुञ्जीत विधिदृष्टेन कर्मणा ॥२९३॥

चत्वारः पणवाः कार्या दशरूपविधौ पुनः ।
आतोद्यान्यपि तान्येव नानावस्थासु वादयेत ॥२९४॥

नाटके सप्रकरणे भाणके(णे) प्रहसने तथा ।
मृदङ्गं पणवं चैव दर्दरं चैव वादयेत् ।
एवमेतद् बुधैर्ज्ञेयं मृदङ्गानां तु लक्षणम् ॥२९५॥

गतिवाद्यतालपाठ्यग्रहमोक्षविशारदोऽथ लघुहस्तः ।
छिद्राच्छेदविधिज्ञः सिद्धस्थाने प्रवाकुशलः ॥२९६॥

कलरिभितमधुरहस्तः सुनिविष्टो रक्तमार्जनो बलवान् ।
अवहितशरीरबुद्धिर्मृदङ्गवादी गुणैरेतैः ॥२९७॥

आलेपनप्रमाणज्ञश्चतुर्मार्गकृतश्रमः ।
प्रतिग्राही च (ग्रहीता) सिद्धीनामङ्गदोषविवर्जितः ॥२९८॥

स्वभ्यस्तकरणः सामे गीतज्ञो गुणितग्रहः ।
सुसङ्गीतप्रयोगज्ञो मृदङ्गी तु भवेद् गुणैः ॥२९९॥

भ्रान्तोर्ध्वहस्तः कालज्ञश्छिद्रावरणपण्डितः ।
अभ्यस्तकरणश्चैव भवेत् पाणविको गुणैः ॥३००॥

निश्चलो निपुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवादी च दर्दरी तु प्रशस्यते ॥३०१॥

---

करीषस्य शुष्कगोमयद्वा(ग)शिशेषमध्ये । यत्रैषां चर्मबद्धविकृतिर्न भवति । सङ्घातानन्योन्यविदिलष्टान् ॥२९२—२९६॥

कलश्चतुरो रिभितो दीप्तो मधुरः श्रुतिसुखदो हस्तो यस्येति । सुश्लिष्टो दृ(हृ)ष्टो दृढा(ढो)सह ॥२९७॥

प्रतिगृ(ग्र)हीता सिद्धीनामिति ॥२९८॥

अन्तरवाद्यज्ञः । गुणिता अभ्यस्ता ग्रहा ग्रहमोक्षमन्धयो (ये)न । सुष्ठु सङ्गीतप्रयोगमेलनिका जानातीति तथोक्तम् ॥२९९॥

भ्रान्तेत्यत्र भ्रमणक्रियाचतुरः ऊर्ध्वोन स्थिरश्च हस्तो यस्य ॥३००॥

वादनस्य मुरजवाद्य(द्या)न्तर मध्यान्तर चेति विशेषश्च ॥३०१॥

एतत सर्वं नाट्ययोग समीक्ष्य
प्रोक्त वाद्य सर्वलोकानुभावात ॥
नोक्त यच्चेदागमाद्वस्तबुध्या
सद्भि कार्यं मार्गजातो समीक्ष्य ॥३०२॥

स्फुटप्रहार विशद विभक्त
रक्त विकृष्ट करलेपन च ॥
त्रिमार्जनापूरितरागगम्य
मृदङ्गवाद्य गुणतो वदन्ति ॥३०३॥

वाद्ये तु यत्न प्रथम तु कार्यं
शय्या हि नाट्यस्य वदन्ति वाद्य ॥
वाद्ये च गीते च हि सु(स)प्रयुक्ते(क्तो)
नाट्यप्रयोगे(गो)न विपत्तिमेति ॥३०४॥

इति भरतीये नाट्यशास्त्र पुष्करवाद्यो नामाध्यायश्चतुस्त्रिंश ॥

---

नोक्त यच्चेदितीति। हुडुक्का विसिसक्षानशङ्कामात्रमेतत्। वस्तुतस्तु न सर्वमुक्तमिति दर्शयति ॥३०२॥

विकृष्टमिति। आराच्छ्रवणयोग्यम ॥३०३॥

नाट्यस्य वदन्ति वाद्यमिति। पञ्चधेति साम्यात प्रतिष्ठित भवति। तदाह। गीते। वाद्येऽपि तु सम्प्रयुक्तो नाट्यप्रयोगो न विपत्तिमेति। गीतातोद्याभ्या रामरावणादिविशेषास्पर्शनेनैव रसाभावमवर्णौचित्यमाधीयते साम्य च यतो भवन्ति सर्वा सिद्धय इति शिवम् ॥३०४॥

नादात्मसादाशिवभक्तिधाम
सन्तानकृत्य कलितसाभिधान ।
रात्रिंदिव तस्य सुतेन दृष्टा
सुपुष्कराध्यायसमाप्तिवृत्ति ॥

इति श्रीमहामाहेश्वराभि(न)वगुप्ताचार्यविरचिताया नाट्यवेदवृत्तावभिनवभारत्या पुष्कराध्यायश्चतुस्त्रिंश ।

भिन्नपाठक्रमवान्

## अथ चतुस्त्रिंशोऽध्यायः ।

ततातोद्यविधिस्त्वेव मया प्रोक्त समासत. ।
अवनद्धविभागेन लक्षण कर्म चैव हि ॥१॥

आतोद्यानां प्रवक्ष्यामि विधि वादनमेव च ।
मृदङ्गपणवाना च दर्दरस्य तथैव च ॥२॥

गान्धर्वं चैव वाद्य च स्वातिना नारदेन च ।
विस्तारगुणसम्पन्नमुक्त लक्षणकर्मत ॥३॥

अनुवृत्या तयो स्वातेरातोद्याना समासतः ।
पौष्कराणा प्रवक्ष्यामि निवृत्ति सम्भव तथा ॥४॥

अनध्याये कदाचित्तु स्वातिर्वै दुर्दिने दिने ।
जलाशय जगामाथ सलिलानयन प्रति ॥५॥

तस्मिन् सरोनिषण्णे च प्रविष्टे पाकशासन ।
धाराभिर्महतीभिश्च कर्तुमेकार्णव जगत् ॥६॥

पतन्तीभिश्च धाराभिर्वायुवेगाज्जलाशये ।
पुष्करी(रा)णा कलरव पत्राणामभवत्तदा ॥७॥

तेषा धीरकल शब्द निशम्य स महामुनि ।
आश्चर्यमिति सञ्चात्तमवधारितवान् स्वयम् ॥८॥

केचिदेकवक्त्रज केचित् त्रिवक्त्रज केचिन्निर्वक्त्रजमिति । यथा
रैफ· सर्ववक्त्रेषु । दका(र)धकारावालिङ्ग्यवामके । आलिङ्ग्य दक्षिणे

मुक्त इति । घत्थतित्थडित्थडितक्ता खदेड खदेड् गुरुखेन्दु खेण्डभत्थित्थित्थ न्धित्था विघातव्य । एव वितस्तमार्गगणे समकरवर्जिता प्रहारा स्यु । ऊर्ध्वमार्गेण विशेषो कार्या(र्य)श्च गोमुख्या । खगमत्थिमटटघेण्डाखुखुण खरखेण्डा खेदुड् खुणुमा दुणकितिकिन्तिकिट्टिमा खुखुणुद्वेघे धोघा विधातव्या ।

इदानीं गोमुखीवाद्यम् । डणघेण्डणखुखुन्धुलघदुलेड् घटमटटाड् इणुघुणात्थि घटघिटिमा कुकुटाङ्ङ्णुघेड् किदिमाड् घे घे खो खो च गोमुख्या ॥१४॥

ये त्वालिप्तसमुत्था सर्वेमार्गेस्तु विघातव्या ।
प्रहणाक्षरसन्धानेऽप्याद(दि)मृदङ्गाद् ग्रहो भवति ॥१५॥

एतेषा तु प्रवक्ष्यामि दर्शनानि यथाक्रमम् ।
चतुर्णामपि मार्गाणामक्षरग्रहण यथा ॥१६॥

धृङ् वृङ् घट्टघड् मत्थिटत्थिमटामटत्थिदिङ् मनघेड् थलङ् क्लेङ् धिघकाड् त्वड्डिते वाद्यम ।

मद्रा तकिता धृड् वृड् खो किटि घेडाड् गत्थि किटिकेत्था पकुताकिता किरटामिति सयोगो वितस्तेस्तु खोमाड् गुडुघेड् घेघेघेण्डा घेघेदद्वमा ।

आलिप्ते सयोगे कार्योऽ वादने तज्ज्ञै ॥

घंघटत्थिकटागुडुघेड् घेटां घेण्डा धिमितित्थिथकेसरेघेगघे णोणोणमिति वैव गोमुख्या उक्ता मार्गा ।

एतेषा पुष्कराणा त्रिविध प्रचार । समो विषम समविषम इति । वामोर्ध्वगयोर्वामसव्ययोरडडितामार्गेऽपि कार्य । समप्रचारस्त्वालिप्ते वाद्यकरणे तु वाध्वय(ग)सव्यानां ग्रहणे वामस्तु कर्तव्य । सव्योध्वगमनाना सन्यो विषमप्रचारे तु ॥१७॥

एव स्वस्तिक योगाद द्वाभ्यामपि यद् भवेत्तु हस्ताभ्याम् ।
माने वितस्तिसज्ञे प्रहते विषम प्रचार स ॥१८॥
स्वच्छन्दकस्तु करयो शेष प्रहतेषु मार्गकरणेषु ।
षड्डितगोमुखयोगात् समविषमो हस्तसञ्चार ॥१९॥

शृङ्गारहास्ययोर्वाद्य योज्य तथाञ्चिते मार्गे ।
वीराद्भुतरौद्राणां विततमार्गेण वाद्य स्यात् ॥२०॥

करुणरसेऽपि च कार्यं वाद्य चालिप्तकरणमार्गेण ।
बीभत्सभयानकयोस्तथैव नित्य हि गोमुख्या ॥२१॥

रसात्मप्रयोग दृष्ट्वाऽभिनय गतिप्रचार च ।
वाद्य नित्य कार्यं यथाक्रम स्थानसंयोगात् ॥२२॥

एतत् प्रहतविधान कार्यं मार्गाश्रिते रसैः सम्यक् ।
वक्ष्याम्यतश्च भूयो दर्दुरपणवाश्रित वाद्यम् ॥२३॥

तत्रातिथ्याश्रित स्यात् पुष्करनामग्रतो यत्र ।
यस्त्वनुगत मृदङ्गा(ङ्ग)मृदङ्गादनुशब्दितमुच्यते तु तद्वाद्यम् ॥२४॥
समवायितमृदङ्गैश्चैव साम्येन यद् वाद्यम् ।
कलनय पणवमुखां बोद्धा शृङ्गाणाम् ।
एते वर्णा नित्य पणववाद्ये प्रयोक्तव्या ॥२५॥

ठिरिठिण्टा थोंथोंथोङ्कुलाकिरिकिरिण्टा णोणोणाणाश्च किरिकण्टा भाटाभटरिव टे टे वोण्णां पणवाद्य तस्य प्रहत कार्यं कनिष्ठानामिन्याग्रेणैव ॥२६॥

प्रशिथिलवध्यिलकक्षे पणवे कङ्कार एकप्रकारस्तु ।
तर्य(था)न्त प्रकार पणवे कार्यं प्रशिथिल(ल)बध्ये ॥२७॥

कम्परकृत प्रहार होङ्कारो तु पणवे विधातव्या (व्य) ।
शेषा प्रान्तकरणसंयोगात संयोगकृता विधातव्याः ॥२८॥

धोकारस्तु स्वारवे पणवे कक्ष्याञ्चिते तु समयति ।
णंकारो युक्तो द्र इति पणवप्रकार स्यात् ॥२९॥

तिर्यग्गृहीतकारताम्यवर्तितमिष्यते प्रहारोऽयम् ।
द्रुहुला कुहुला केमसासिन्धि पुहुलामितीय प्रकार स्यात् ॥३०॥

एव च षोडशकृता प्रहारा शुद्धा प्रकीर्तितास्तज्ज्ञै ।
दर्दुरपणवमृदङ्गमिश्रितवाद्य प्रवक्ष्यामि ॥३१॥

न वर्तिकाभाव केचिदिच्छन्ति मिश्रित केचित् ।
केचिद् युगपत्करण केचित् पर्यायकरण तु ॥३२॥

एकैकसम्प्रयुक्ता वर्गानुगतास्तथैव सम्प्रयोक्तव्या ।
घेंता कथ कुहुला तकिता मृदङ्गेषु ॥३३॥

अथ दररे वड् द्ररेड् कुहुला मटधि पणवे च ।
यमटहिम्भ कुहुला मटध्थि देड् वेड् विमिश्रितस्तु ॥३४॥

एभ्यो येऽन्ये शेषा न मिश्रा एव नित्यशः कार्या ।
पूर्वेऽपि च मिश्रत्व व्रजन्ति सर्वे यथायोगम् ॥३५॥

अथ युगपत् करण कुहुलाणणा खुखुणोखेद्दोमादोण्णा ।
यथोघोंत्थि द्वे योज्य पणववाद्यम् घ(घु)र्यक्रुन च ।
क्रमशः करण परिवादने के(दके) न कर्तव्यम् ॥३६॥

भटभेमेघोधोणाणकिरिणि किण्णाकृत चेति ।
पणवस्याचारबन्धे कार्य धालुलुणेति वाद्यत्रयम् ॥३७॥

भूय कृत च प्रतिकृत(त) मार्दङ्गिकदादुरिकाभ्या तु ।
यद्यन कुर्यात समुत्थ प्रहारजात गतिप्रचारेषु ॥३८॥

अनुगच्छतमक्षरवृत्त तदेव वाद्य तु पणवेन ।
न हि चित्र कर्तव्य गतिप्रचारेषु वाद्य(द्न)मनन्तज्ञै ॥३९॥

समतालि तत्र हि लन्न लक्ष्यते पादसञ्चारे ।
उपरिकरण यथेष्ट कर्तव्य पणवे मृदङ्गे च ॥४०॥

तद्वत प्रहारकरण मृदङ्गवाद्ये विधातव्यम् ।
प्रायेण सर्ववाद्येष्वादौ दणवप्रहा प्रयोक्तव्या ॥ ४१॥

वक्ष्याम्यत परमहं दर्दुरे घेत्ततिता केतदेड् ।
केसदेवेदेरेभिण्णतमिततिमत्थि ॥४२॥

इति दर्दुरे प्रहर कार्यो मुक्ते निषण्णे च ।
कायस्तत्र णणण्णारेद्देप्रेधिकित्थिदक्किक्किकरणे ॥४३॥

वामेन तु भिटियक्स(ल) स्तवद्(ष्ट)ष्टं( )करायेण ।
मुक्ते तमिति चैव निगृह्याशोघ्रकरणानुबन्धास्थितिरेव हिलक स्यात् ॥४४॥

इति दर्दरे प्रहारे वक्ष्याम्यूर्ध्वकरणजातम् ।
रूप कृत प्रकृति(प्रतिकृत) प्रतिभेदा रूपशेषमोघश्च ।
षष्ठो(ष्ट) वं प्रकृति(प्रति) गुर्के(च्क) ह्येते(तज्) ज्ञया (य) (हि) कर
(र)णा(ण)जातम् ॥४५॥

तत्र रूप नाम विहस्तकरणकरणम् । यथा ।
गवुखुणखुधम्मयिमत्येत्तरघय घन्तिमेंयिघेण्टां ।
करगुडरणकिटिजखेघडचेघड घेक्खमिति रूपम् ॥४६॥

प्र(ति)कृत नाम यत्रैक करण त्रिपुष्करमप्युद्‌भावयति । यथा । यखुवण खु श्रमतिय वर्गेरघटा घट तियधक सां गुदु घ कुहलां ह्ला दोघोघोणा इति ॥४७॥

कृतप्रतिकृताख्य प्रतिभेदो नाम युगपत् कृते करणे मृदङ्गाना यथुपरिकरणेन गच्छति । यथा । घोघोणाखोकुहुलालणाणात्यि कटामटातियट-धिघेण्टाम् ।

एभि करणविशेषै प्रतिभेदो नाम विज्ञेय ॥४८॥

विरूपशेष नाम विरामकृतं । यथा । खुखुण्णाणोमदघेंघेण्टा मदघेण्टामत्यि आंघोमिनि वाद्य रूपशेष तु ॥४६॥

प्रतिशुष्क नामानुस्वारो मार्दङ्गिकपाणविकदार्दुरिकाणाम् । यथा घटमटटियदुणघेड् किटिघेड् घोड् घोण्डा घोण घोण खोखो खेकुटकुटु किटकिट वखोत्यिणणत्यि ॥५०॥

चतुष्कारये सर्वभाण्डे विरामे द्रुतपाणिन्यो नद्यघोवा(व)दोघ । यथा । यकिटिमियविठकिटिघिटि घेड् घेण्टाण्टाण घोण घोण घट घटगुदुघेड् गघेतिरिण-गेग घो घो तयो घघु ॥५१॥

करणाना समायोग करणेषु विधीयते ।
अनेन (नैव) विधानेन योज्य वाक्करण बुधै ।
यतिन(र्ना)म समा श्रोतोगता गोपुच्छचे(जे)ति च ॥५२॥

यतिपाणि(णी)नां त्रिविध सयोग स च त्रिप्रकारो भवति । यथा । राढा(ढ)विद्धां(द्ध) शय्या(म्या)गतम । एवम् ।

त्रिप्रकार सप्रयोग करणेषु विधीयते ।
अपपाणिस्तु यत्र स्यात् तथा चैव स्थिना लया ॥५३॥

गोपुच्छा च यतिर्वाद्य तद्वै शम्यागत भवेत ।
यथाऽवगोतिप्राधान्य मागश्चैव च दक्षिण ॥५४॥

प्रत्युक्त(त्त)मेषु पातेषु वाद्य शय्या(म्या)गत भवेत ।
स्रोतोगता यतिर्यत्र लतो मध्य तथैव च ॥५५॥

समपाणिस्तथा चैव विद्ध वाद्य तु तदभवेत् ।
स्थितालयात् प्रभृत्येषा प्रमाण सम्प्रवतते ॥५६॥
कार्यहानि कुलानां च शेषप्वन्येषु पाणिषु ।
यथाक्रम विकर्तव्या नाटयपुक्तिमवेक्ष्य च ॥५७॥
तिस्रो मार्जना नाम ।
मायूरी ह्यधमायूरी तथा कार्मारवी पुन ।
तिस्रस्तु मार्जना ज्ञेया पुष्करेषु स्वराश्रया ॥५८॥
गान्धारो वामके काय षड्जो दक्षिणपुष्करे ।
ऊर्ध्वगे मध्यमश्चैव मायूर्यंश्च स्वराश्रया ॥५९॥
वामके पुष्करे षड्ज ऋषभो दक्षिणो तथा ।
धैवतश्चोर्ध्वगे कार्य अधमायूरकाश्रया. ॥६०॥
ऋषभ पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वगे कार्या कार्मारव्या स्वराश्रया. ॥६१॥
एतेषामनुवादी तु जातिरागस्वरान्विता (त) ।
आलिङ्गे मार्जन प्राप्य निषादस्तु विधीयते ॥६२॥
मायूरी मध्यमग्रामे त्वर्धा षड्ज तथैव च ।
कार्मारवी च कतव्या साधारणसमाश्रया (या) ॥६३॥
स्वरा ये स्थायिनो यानि श्रुतिसा(धा)रणाश्रया ।
त एव मार्जन कृत्वा ज्ञेया सञ्चारिण स्मृता ॥६४॥
वामोर्ध्वगान्यामार्ध्यार्धा कार्या वै लेपन स्वरा ।
शैथिल्यादायतत्वाच्च कार्यस्त्वालिङ्गकातिके ॥६५॥
शैथिल्य च यत चैव वर्धापीडनमार्दवात् ।
एव स्वरोद्भव कार्यो मार्जनासु प्रयोक्तृभि ॥६६॥
मार्जन तु मृदा कार्यं वामगोर्ध्वगयोस्तथा ।
लक्षण मिश्रिकायास्तु गदतो मे निबोधत ॥६७॥
निःशकरा निःसिकता निस्तृणा निस्तुषा तथा ।
न पिच्छिला न विशदा न क्षारकटुका तथा ॥६८॥

नावदाता(नवाकृष्टा)न चाम्ला(म्ला)ना न वि(वि)रक्तदा ।
मृत्तिकातेपन द्यर्थी यथाकार्यं तु मार्जनम् ॥६९॥

नदीकूलप्रदेशस्था श्यामा या मृत्तिका भवेत् ।
सोमाव(प)तरगड्लक्षणा तया कार्यं तु मार्जनम् ॥७०॥

बहुवा या(ह्रा)वदाता तु कृष्णा मुर्वी न च स्थिरा ।
सतुन्न न स्वरकरी श्यामा यत्र न दृश्यते ॥७१॥

तत्र गोधूम(धू)र्णं वा यवचूर्णं च वापयेत् ।
यवगोधूम०चूर्णस्तु(न्तु) कदाचिदुपभु(यु)ज्यते ॥७२॥

पुष्करस्य तु दोष स्यादेकस्वरकरो भवेत् ।
एष तु मार्जनायोगात्स्वाया स्वरकरो भवेत् ।
त्रिसयोगस्य वक्ष्यामि लक्षण द्विजसत्तमाः ॥७३॥

त्रिसयोगो नाम गुरुगच्छयो लघुगच्छयो गुरुलघुगच्छय इति । तत्र गुरुगच्छयो नाम गुरुस्थितलयवृत्त । यथा । स्थितटां तक्तिटां तक्टिटां पतिति मत्ति गतयोरथ घटमविचारेट्, घेण्टाकटयामेव गुरुलघु स्यात् ॥७४॥

लघुगच्छयो नाम लघुद्रुतलयप्रवृत्ते यथा । घटमटघटमरिचमटारियघटघट-द्रुक्ते लघ(घु)शब्द इति गयोगा ज्ञेया मृदङ्गयोगप्रयोगज्ञैः । (त्रि) प्रकृतिर्नाम सरवमनुगतमोघश्चेति ॥७५॥

अक्षरसवृत्त वाद्य पदवर्णसम तथैव प्रयुक्तम् ।
सम गुविभक्तकरणयुत तस्य वाद्य विज्ञातव्यम् ॥७६॥

सामपाण्य(ण)पाणियुत स्फुटप्रहारकरणानुगम ।
वाद्य प्राण्य भवेदनुगत च नैककरणाश्रयम ॥७७॥

(उ)पर्युपरिपाणि(सम) द्रुतलय च (विसमयम्) ।
आविद्धकरणबहुल वाद्य योज्य धुर्यरोधम् ॥७८॥

सर्वस्यैव तु वाद्यस्य अष्टौ साम्यानि भवन्ति ।
अक्षरसम तालसममङ्गसम लयसम च ।
न्याससाय(प)न्याससम पाणिसम चेति विसमम ॥७९॥

यद्वस्त तु भवेद्गान गुरुलघ्वक्षरान्वितम् ।
तद्वत् तु भवेद्वाद्य तदक्षरसम स्मृतम् ॥८०॥

देशानुरूपजातिशृङ्गारे चोत्तरे स्त्रीणाम् ।
वामोर्ध्वगप्रवृत्ता दाद्यक्षित्वा(प्ता) चतुष्टयपुक्ता ॥९१॥
उपदेशादपेतरूपा करुणरसे सा भवेज्जाति ।

यथा—

घेद्राड् घेघेभिर्जात्यक्षरैः समायुक्ता ॥९२॥
देशादपेतरूपा सा कार्या वाद्ययोगेषु ।
पर्यागच्छति पूर्वं यस्मिन् सिद्धंस्तु त करणजातम् ॥९३॥
त्रिविधेऽपि च लययोगे पर्याया नाम सा जाति ।

यथा—

घेवोड् घेवोड् गुदुघड् प्राया वामोर्ध्वगमे वामहस्तमञ्चारा ।
पर्यायकुला जातिर्वीराद्भुतरौद्रयोगेषु ॥९४॥
गुरुयुग्म लघुयुग्म तथैव च गुरुलघुनी चैव लघुश्चैव ।

यथा—

धिड् माड् घटघेऽ गुदुघेड् दघेड् दघेड् मात्यिमेत्यम् ।
विष्कम्भाख्या जाति शृङ्गारे चोत्तमस्त्रीणाम् ॥९५॥
एकैकाक्षरयोगाद यद दाद्य सर्वमार्गसयुक्तम ।
पर्यस्ता क्रमहस्ता जाति समहस्तविचारसयुक्ता ॥९६॥
आकाशे र(थ)विमानकृर्पिविद्याधरभुजङ्गमादीनाम ।
चरिते गनिविन्यासेऽथ धा(रा)या चैव पयस्ता ॥९७॥

यथा—

घेड् ताट् घेड् ताड् देह्लामेभिर्जात्यक्षरैः समायुक्ता ।
पर्यस्ता जातिर्वै साऽधमपुरुषेषु कर्तव्या ॥९८॥
अपर्याणिकरपुक्तलष्पादेण(स्त ह्यादौ) मध्यमलयेन च यस्तुल्यम् ।
आरम्भ त विद्यादन्तेवासि श्रुत यस्या ॥९९॥

यथा—

मगठ खुखुकिटा एभिर्जात्यक्षरैः समायुक्ता ।
अधमस्त्रीणा योज्या सरम्भा नाम वै जाति ॥१००॥
ऊर्ध्वाङ्गदक्षिणमुखे क्षिप्ता प्रसृता वितस्तमार्गे तु ।
पार्ष्णिसमस्ता जाति कार्या शृङ्गारहास्यगतौ ॥१०१॥

तत्थिकदमत्थिकरणं सपाणिनिपीडं ।
चन्द्राग्रुघेन्द्रडिताड् पाणि समस्त पुनर्जाति ॥१०२॥

स्थितिलयगतिविन्यासे शृङ्गारे भवति योत्तमप्रकृतौ ।
धीरोत्तमपुरुषाणामन्येषा दानवादीनाम ॥१०३॥

स्वहु(स्व)स्तिकहस्तविचारा सर्व(र्वं) मार्दङ्गप्रहारसयुक्ता ।
सा त्रिलयशय्युक्ता दुष्करकरणा भवेज्जाति ॥१०४॥

यथा—

दुणदुणदुणांकित्थिमघेड् मदत्थिदुधकिटिघेड् ।
एभिर्जात्यक्षरयोगैर्दुष्करकरणा भवेज्जाति ॥१०५॥

दैत्येन्द्रभुजगराक्षसपिशाचगन्धर्वगुह्यकादीनाम् ।
गतिविन्यासे कार्या दुष्करकरणा भवेज्जाति ॥१०६॥

ऊर्ध्वाङ्गदक्षिणमुखो(त) क्षिप्तप्रहिता वितस्तमार्गा च ।
अङ्कोर्ध्वगप्रवृत्ता दक्षिणवामप्रवृत्ता च ॥१०७॥

प्रायेणान्तर्मार्गा वितस्तमार्गाश्रिया तु विज्ञानाम ।
घकिलृड् घृड् घृड प्राया जातिरियमूर्ध्वकोष्ठा स्यात ॥१०८॥

सर्वमार्गैः समुद्धृत्य यद्वाद्य करण भवेत् ।
उच्चित्तिका विजानीयाद् गूढमृङ्गलिकाकृत(ता)म् ॥१०९॥

यथा—

केत्तां केत्तां गदितामेभिर्जात्यक्षरैं समायुक्ता ।
राज्ञा स्वभावग(मने)जाति कार्या वितस्तिकृता ॥११०॥

गोमुख्यक्षरसहिता सर्वमृदङ्गप्रहारसयुक्ता ।
कुहकाभिनये योज्या वेलाम्बिरवृष्टलिङ्ग षु ॥१११॥

यथा—

घेण्डाण्डादोरकिता घट मर्दथ घट्टद्रुघ ।
एभिस्त्वक्षरयोगैरेवा(राद्या(च वाद्यं) भवज्जाति ॥११२॥

वामनविह्वलपञ्जम्पू(ञ्जेष)धान गाव च(गद्गदवादाम) ।
गदहृतवादा(एव) वाद(द्या)जातिरन्वेषा गमन तु रसध्या ॥११३॥

पृथिवी वादित यत्र पवनो न्यप्तु दृश्यत ।
मृदङ्गपणवादीनां आ जाति (ना जाति) मा मार्जि(र्जि)रो यथा ॥११४॥

द्रोंद्रोंठोठोमेभिर्जात्यक्षरैं समायुक्ता ।
मृदङ्गपणवा(दी)ना स्त्रीणामेया(भवेज) जाति ॥११५॥
अवतीर्णं यद वाद्य त्रिगुर्णवाद्यकरर्णमृ दङ्गानाम ।
दर्दुरपणवोपगमादवकीर्णा नाम सा जाति ॥११६॥

यथा—
केन्ता केन्ता केतामेभिर्जात्यक्षरैस्तु सम्प्र(स)युक्ता ।
गोमुखमार्गे जाति सा चैव (व)गुणा विधातव्या ॥११७॥
अप्रकीर्णविविधं करणैरिह मार्गयोगलघुयुक्तं ।
दर्दुरपणवमृदङ्गैरर्घार्घ(घं)वादने कार्यम ॥११८॥

यथा—
घगद्घेण्डा सेन्द्रामेभिर्जात्यक्षरैस्तु सयुक्ता ।
सम्प्लवमिति विज्ञेया कर्तव्या वानरे करणे ॥११९॥
विध्वंर्नानाकरणैश्चित्रै समृदङ्गप्रहारसयुक्तं ।
स्वाभाविकोत्तमगतौ विधूय जातिर्विधातव्या ॥१२०॥

यथा—
तिंक्षिसा मटंत्थि कण घुकाभ ।
एभिस्त्वक्षरयोगैर्विधूतजातिर्विधात्या ॥१२१॥
एता गति प्रचारेषु विज्ञेया जातयो बुधै ।
याश्च नोक्ता मयावाऽ(चा)स्मिन ता ग्राह्या लोकतोऽर्थत ॥१२२॥
एवमेतेन विधिना कतव्य वादन बुध ।
गतिप्रचारे गीते च दशरूपे तथैव च ॥१२३॥
सप्तरूपे विधाने च छन्दसा कारितेषु च ।
वाद्य गुर्वक्षरकृत तयार्धाक्षरमेव च ॥१२४॥
गतिप्रचारे कतव्य गानसौम्यायदर्शनात ।
तस्व चानुगत चैव तथौघ करणाश्रयम ॥१२५॥
राज्ञा ललितभावत्वाद योज्य वाद्य स्वभावजम ।
तत्त्व तु प्रथमे गाने द्वितीयेऽनुगत भवेत ॥१२६॥
तृतीये त्वौघसज्ञ तु वाद्य गतिपरिक्रम ।
भेयाणा छन्दतश्चित्र ध्रुवाणा सम्प्रयोजयेत ॥१२७॥

अथ स्थितावकृष्टाना वाद्य चानुगत भवेत ।
प्रावेशिकीना कर्तव्य तत्त्व चानुगत तथा ॥१२८॥

नैष्क्रामिकयत्नतरगत कार्य त्रिलयवादिना ।
द्रुत प्रासादिकीना च ध्रुवा पञ्चविधा भवेत् ।
एव ध्रुवाणा कर्तव्य वाद्य प्रकरणाश्रयम् ॥१२६॥

यो मात्रांशविकल्पस्तु ध्रुवापादे भवेदिह ।
स तु भाण्डेन कर्तव्यस्तज्ज्ञैर्गतिपरिक्रम (मे) ।।१३०॥

एव गतिप्रचारेषु वाद्य योज्य प्रयोक्तृभि ।
अथ ऊर्ध्वं प्रवक्ष्यामि ग्रहान् भाण्डसमाश्रयान् ॥१३१॥

शम्यातालग्रहा केचित् तथाकाशग्रहा पुन ।
तत्र शम्याग्रहा ज्ञेया नित्य दक्षिणपुष्करे ॥१३२॥

वामोध्वगे ग्रहाश्चापि ज्ञेयास्तालग्रहा बुधै ।
तर्जनीग्रहकादित्य (नित्य)मालिङ्गे परिकीर्तिता ॥१३३॥

अथाकाशग्रहा प्रोक्ता निष्कामे वा प्रयोजिता ।
प्रासारितानियश (नि श) म्याद्यास्तालाद्यास्तु ध्रुवाङ्गजा ॥१३४॥

लय च न ग्रह गान तत्र स्यात् तर्जनीग्रह ।
शीर्षक चोद्धता चैव प्रदेशिन्या ग्रहा स्मृता ॥१३५॥

नत्कुटस्याडडिका(ता)याश्च प्रावेशि(सादि)कयास्तथैव च ।
सन्निपातग्रहा ज्ञेयास्तथैवैककला(लो) विधि ॥१३६॥

आकाशग्रहका ज्ञेयाश्चतुर्वि(द्वि)कलयोगजा ।
तथा चाङ्गनिबद्धानि गीतकानि यथाक्रमम ॥१३७॥
एवमेते बुधैर्ज्ञेया ग्रहा भाण्डसमाश्रया ।
ताण्डवे सुकुमारे च वाद्य वक्ष्याम्यत परम् ॥१३ ॥

अभाण्डमेक(क)गानस्य परिवर्त प्रयोजयेत ।
तस्यान्ते सन्निपातस्तु कार्यो भाण्डग्रहो बुधै ॥१३६॥

अथा(थवा) नृत्तशोभार्थमङ्गाङ्ग (ङ्ग)परिकी(व)र्तनम् ।
गीतकस्य प्रकर्तव्य व(ल)यस्य परिवर्तनम् ॥१४०।

यत्राभिनेयमङ्गं तु न वाद्यं तत्र योजयेत् ।
यत्राङ्गहारनृत्तं तु तत्र वाद्य प्रयोजयेत् ॥१४१॥
यदा गीतवशादङ्ग भूयो भूयो निवर्तते ।
तत्राद्यमभिनेय तु शेष नृत्तेन योजयेत् ॥१४२॥
यद्वत्त तु पद गाने तादृश वाद्यमिष्यते ।
गीतवाद्यप्रमाणेन कुर्यान्त्वाङ्गविचेष्टितम् ॥१४३॥
वाद्य गुर्वक्षरकृत तथाल्पाक्षरयोजितम् ।
मुखोपग(व)हन कार्यं प्रकृष्ट वर्णतस्तथा ॥१४४॥
स्थितेऽन्तरत्व प्रहार तु मध्येऽक्षरसम तथा ।
कार्यं तु गीतके वाद्य(द्य)द्रुते चोपरिपाणित(क)म् ॥१४५॥
सम रक्त विभक्त च स्फुट शुद्ध(द्ध) प्रयोगजम् ।
नृत्ताङ्गग्राहि कालज्ञैर्वाद्यं योज्य तु ताण्डवे ॥१४६॥
सनृत्तेषु प्रयोगेषु तत्त्व ह्यनुगत भवेत् ।
अनृत्तेषु प्रयोगेषु तत्त्वमोघ च वादयेत् ॥१४७॥
स्थिते मध्ये द्रुते चापि यथागान तु वादयेत् ।
पदनृत्ताङ्गहारेषु कृतेन वं प्र(न प्र)क्रमेण तु ॥१४८॥
यो विधिर्गानवाद्यानां पदाक्षरलयान्वित ।
स तु नृत्ताङ्गहारेषु कर्तव्यो नाट्ययोगत ॥१४९॥
एतास्त जातय प्रोक्ता दश चाष्टौ च भाण्डजा ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रकारान् वाद्यसश्रयान ॥१५०॥

अथ प्रकारा । चित्र(त्र) सम(मो) विभक्त(क्तो) हीन(छिन्नो) भिन्न(छिन्नविद्धो) विद्ध (द्धो) (अनुपोड) स्वरूप(प) स्वरूपानुगतम(तोऽ)नुगतः अ(सृतोऽ)नुस्मृत(सृत)विच्युतो दुर्ग अ(र्गोऽ)वकीर्ण अ(र्णो)र्धावकीर्णं एकरूप परिक्षिप्त सञ्चि(गाचोक्)त. समलेख विश्रलेख सर्वसमवाय(यो) दृढ इति ॥१५१॥

तत्र ।

रचितादिभि प्रयुक्त चित्रं करणैरनेकविधहस्तै ।
त्रतय त्रिपाणियुक्त चित्र वाद्य बुधैर्ज्ञेयम् ॥१५२॥

दर्दुरपणवमृदङ्गैर्नानाकरणैस्तु य सम्यक् ।
समयतिकालाद्युल स तु विज्ञेय समो नाम ॥१५३॥

एकायनस्तथा यस्या यतश्च सस्थान्सविभक्तश्च ।
अक्षरपाणिलयेषु च दि.क्रत्त् स्व (स विज्ञेय) ॥१५४॥

वाद्य त त्रिलय यत्र सहसा च विवधते ।
सर्वातोद्यप्रवृत्त त प्रचारश्छिन्न एव स. ॥१५५॥

अवपाणिमृदङ्गाना पणवोपरिपाणि च ।
भवतो यत्र वाद्ये तु छिन्नविद्ध इति स्मृत ॥१५६॥

मृदङ्गकरण वाद्य पणवो वेधयेद् यदि ।
सूचीविधविचित्रस्तु करणैर्विद्ध एव स ॥१५७॥

विद्धामृविद्धय द्वाभ्या (द्व यद्वाद्य) सवतोद्येषु दृश्यते ।
परस्परविरोधे तु अनुपीडस्तु सस्मृत ॥१५८॥

विद्युद्वाद्यस्तू न समतालकृतस्तथा ।
स्वरूपपात च (स्वरूप)व स्वरूप इति सस्मृत । १५९॥

मृत्व (यो ऽत्र) पणवो ऽपि पणवो दर्दुरोऽपि वा ।
तयानुप्रासादानोद्य स्वरूपानुगतस्तु स ॥१६०॥

अनुगद्य मृदानाद्य गच्छेद् यत् स सम पुन ।
श्रुतगत् समता वाद्ये तदाऽनुसृत उच्यते ॥१६१॥

एकैकानुगत मा(गा)ड वाद्यजातिसमन्वितम् ।
कृत्वाऽन्यजातिक कुर्यात् तदाऽनुसृतविच्युत ॥१६२॥

यत्र प्रचारविदम (म) सर्वमार्गप्रबोधनम् ।
अविमस्ताक्षकृत तद् दुर्गं वाद्यमुच्यते ॥१६३॥

समधत्तैर्मृदङ्गस्त वाद्यते पणवैर्यदा ।
नान विचित्रकरणैरवकीर्णस्तदा स्मृत ॥१६४॥

द्रुता(त)लय समारुह्य पणवो दर्दुरोऽपि वा ।
अवघातोऽपि यत्र स्यादवकीर्णा तु सा सदा ॥१६५॥

सर्वातोद्यानि यत्रैक करण भावयन्ति च ।
समवृत्तपदान्येव एकरूप इति स्मृत ॥१६६॥

पणवैश्चोदितं यत्र वाद्यमल्पमृदङ्गजम् ।
सुविभक्ताक्षरगतं परिक्षिप्त तु(प्तस्तु) स स्मृत ॥१६७॥

चित्र हि करणं यत्र पदेनैकेन वाद्यते ।
नृत्ताङ्गहारानुगत ज्ञेय साचीकृत तु यत् ॥१६८॥

कृत्योपरिगत वाद्य पणवै(वो) दर्दुरोऽपि हि ।
यत्रोदीक्षेत सुमुखान् समलेखस्तु स स्मृत ॥१६९॥

चित्र बहुविध वाद्य मृदङ्गपणवादिभि ।
क्रियते यत्र सरवर्धैश्चित्रलेखस्तु स स्मृत ॥१७०॥

सर्वमार्गकृतो यस्तु सर्वपाणिसमाश्रय ।
विच्छिन्नश्च विभक्तश्च स सर्वसमवायक ॥१७१॥

यस्तु मध्यलयोपेत सम स विहिताक्षर ।
गतिप्रचारविहित प्रचारो दृढ एव स ॥१७२॥

एवमेते प्रकारास्तु कर्तव्या नाट्यसश्रया ।
गतिप्रचारे गीते च रसभावौ समीक्ष्य तु ॥१७३॥

एते प्रकारा जातयश्च सर्वमार्गेषु ते स्मृता ।
ते वै गतिप्रचारेषु सुद्धास्ते केवला स्मृता ॥१७४॥

एतेषां प्रयोगमिदानीं वक्ष्यामि । तत्रोपविष्टे प्राङ्मुखो रङ्गे कुतप(प)विनिवेश कर्तव्य । तत्र पूर्वोक्तयोर्नेपथ्यगृहद्वारयोर्मध्ये कुतप(प)-विन्यास । रङ्गाभिमुखा मार्दङ्गिकपाणविकदार्दुरिकेषु गायकनायिकावांशिक-वैणिकसहितेषु प्र(त्य)ग्विलागतनन्त्रीवद्धरतनितेष्वातोद्येषु यथाग्रामरागमूर्छनां मार्जनानुलिप्तेषु मदङ्गेषु द्वाराया निपीडितेषु निगृहीतार्धनिगृहीतमुक्तप्रकारेषु दर्दरवादनमुख्यविन्यस्तहस्तैर्यादर्क दैवतानामावाहनविसर्जनार्थं प्रथममेव त्रिसाम कर्तव्य । स त सर्वचराचरोत्पत्तिस्थितिप्रलयकर्तुर्ब्रह्मणो मुखाभिव्यक्तेन प्रथमेन साम्ना वामपार्श्वे चन्द्र सम्प्रीणयति दक्षिणेन पवमान अनन्तरेण जलसाम्ना मुनीन् । आग्नेयेन बृहत्साम्ना दैवतेन च ॥१७५॥

एव प्रीणयते यस्माद् दैवतानि यथाक्रमम् ।
तस्मात् त्रिसाम विज्ञेय त्रिसामत्वाद बुधैरिह ॥१७६॥

एव च श्रूयते यस्माद ब्रह्माण केशव शिवम् ।
तस्मादेतत् त्रिसाम तु ऋषिभि परिकीर्तितम् ॥१७७॥

चतुर्णामपि वेदानामादावोङ्कार उच्यते ।
तथात्र सर्वगीताना त्रिसाम परिगीयते ॥१७८॥

त्रिप्रकार त्रिलयक तथा चैवाङ्डिताश्रयम् ।
षट्कल त्रिकल चैव त्रिसाम परिकीर्तितम् ॥१७६॥

त्रिविधः साक्षरविधस्तु(धो) गुरुलघ्वक्षरान्वितम् ।
यकारश्च मकारश्च त्रिकैस्त्रिगुणित भवेत् ॥१८०॥

तस्यैव चान्ते पूर्वरङ्गविधिमनुप्रास छन्दोसमेनाक्षरसमेन च वाद्य बहिर्गीतविधानवस्तुत्रितय वर्तनीयम । तत्र च सा नितम्वियोग च तथानुगत वाद्य प्राय प्रयोक्तव्यम । वृत्ते वस्तुत्रिसाम्ना च प्रकृत्याहारोऽय वर्तन यो गीतिकावद वाद्य प्रवतते । तत्रादौ वामोर्ध्वगप्रहारयुत पश्चादालिङ्गनविमर्द-(र्दं)नो गोपुच्छा यदि सामाद्यपि चित्रकरणयुत चतुर्मार्ग विपञ्चीवाद्य प्रवर्तयितव्यम । पूर्वं भाण्डेनाभिव्यञ्जिते रङ्ग स्त्रीबालमूर्वावि(व)कीर्णे च रङ्गे कुतूहलमुत्पन्ना(त्पादना)र्थं भवति ॥१८१॥
अपि च ।

आचार्या सममिच्छन्ति पदच्छेद तु पण्डिता ।
सुकुमारा(र)स्त्र(स्त्रि)यश्चैव निकृष्टमितरे जना ॥१८२॥

तत्र भाण्डे ताण्डवप्रयोगमधिकृत्या तरणकाले लघुपादसञ्चयैर्मार्दङ्गि-कैरङ्गलिप्रचलप्राय वाद्य योज्यम । तत्रान्तराभिमुखो गायक । गायकस्य वामपार्श्वे वैणिक । वैणिकस्य दक्षिणे मृदङ्गवादक । गातुरभिमुखा गायका । मर्तव्यवतरणगीतान्ते सन्निपाता ज्ञेया । लास्यनृत्ताङ्गहारानुगत वाद्य करणधातुसयोगमित्युच्यते । सम रक्तमित्यादि तत इदानीं वामोर्ध्वगप्रहारसयुक्त-मालिप्तमार्गदेशकरसश्रय समुत्थापन्नन(पन)केन वाद्य योज्यम् । यथा । दीर्घट् मतिसङ मयावेड धिर्बिर्बि क्व लु सोकथे दधा केत्ता केत्ता किट घट् इति । पूर्वरङ्गतमपातनिर्दिष्टप्रयोगसमुत्थापनके वाद्य योज्यमिति । तयो पर यत् परिवर्तन चतुर्मार्दङ्गिक शुद्धजात्याश्रय यथा प्रोक्तम् । खोखोण खोखाणा यखोखोणा । एतदद्वयर्थ्येयंवाद्य स्यात् । पुन ( )स्त्री वान्या स्यात् । योखोवोखो लकेणां धयेत्ता घ । नपुसकपदे यथास्वर ख दुर्मागि इति । चतुर्थकारप्रवेशे च वाद्य तूत्थापनके वापकृष्टायामर्धमपि चार्थप्रहो यथा । घेघेत्तां घे खोखोङ्गो घण

दुःखार्धिव्याधितशापक्लेशनिपतितेष्टजनविभवनाशवधबन्धव्रतनियमोपवासयुक्तेषु पूर्वलिप्तमार्गाश्रितमुत्थापनवाद्यं प्रयोज्यं स्यात् । दैत्यदानवयक्षराक्षसभूतपिशाचग्रहादिनियाधाड् दुड् वधसंयुक्तं घुट्टकृतं तकेथोद्राम् इत्येवमादि करणैर्गतिवाद्यं प्रयोजयेत । खञ्जविकलवामनकुब्जादीनां प्रवृत्तगमनेषु घेता कटकामिति वाद्यं प्रयोक्तव्यम । यतिमुनिपाशुपताश्वमादीनां दोलो ऽिरिद दुदेड कसनदोबन्तिकिनी वाद्यं प्रयोक्तव्यम । विदूषकोपधापन षण्डवर्षवराडीना घें घें त्राणोण्णा दौं ण्णा ण्णा ण्णामिति वाद्यं पुनश्चैव । अथ वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां भ्रम्रो द्राड् द्रो घोड् द्रोणा तो खोगाम इति वाद्यं प्रयोक्तव्यम । अथ राज्ञामभियभिर्गोक खु खु इति वाद्यं प्रयोज्यम । अधमानां वेश्यागिन्यकारि(र)काणा नागरिकीयानां(काणां) धकुकुद्रिकिटमतियतिणगोमा धो इति ॥१६०॥

एव तावत समासाभिहित स्त्रीणामवस्थान्तरितानां च । एत एव पौरुषवाद्यविशेषा । तस्मात सम्मान्यन्ते हि भयक्रोधशोककोधादयो विनावा समुत्पद्यन्ते । तत्र म(भा)वापेक्ष मार्गाश्रितवाद्य योज्यं भवति ॥१६१॥

अपि च ।

> जातिमार्गप्रकारैस्तु करणैरक्षरैस्तथा ।
>
> वादयेद् वस्तु सङ्कीर्णं स श्रेष्ठो वादकः स्मृतः ॥१६२॥

अन्तरवाद्यानि च विप्रकारित सिद्धग्रहण परिच्छिन्नमिति । तत्रानुबन्धसज्ञानामान्तरवाद्यम । यथा खोखोणा तो घ इति पाठ्य(म्) । विप्रकारित (तो) यथा । धद्रा छ खाखो इति ॥१६३॥

सिद्धिरपि वा ।

> ऐश्वर्ये विस्मृते भ्रान्ते वस्त्राभरणसंभ्रमे ।
>
> सिद्धिर्वाचैव कर्तव्या नानाकरणसंश्रया ॥१६४॥

सा च सिद्धिर्यथा मार्गकरणाश्रया कार्या चित्रकरणा पञ्चघट्कला । अथ परिच्छिन्न सर्वभाण्डिक इतध्रुवाभूयोपरमने गम्भीरधीरमहारमुद्गल यथा पञ्चघट्कल च स्त्रीसमाना वितस्तमुजाश्रित घ घ घ क स इति । अधमस्त्रीणामडशितवाद्याश्रित यथा । णण्णा खो खो घण्णामिति । अथाधमानां खण्डन नत्कुटविषय यथा । स सकेत किटि किण्णामिति । अवस्थान्तरेषु पुनरेवार्थकृत भविष्यति च । वाद्यविरामे वाद्य साधनकृते विरामे च वस्त्राहरणविनिपाते संयमनकाले । अथ

प्रनादिषयां समपादो विभक्तकरणवाद्य योज्यम् । द्रुतायामुपरिपाणिकरणम् । श्रजितायामपकृष्टसामे(मं)श्सन्निपातकृतमिति ।

एवमेतत प्रयोक्तव्य वाद्य गतिपरिक्रमे ॥१९५॥

अडडितायां च णा खो खो ण द दे दे दे दे खो खो घुण घुण् इति । अथ नस्कुटखञ्जयो( ) णण्णाखुखुणाण्णाण्णा खोणण्णा ण्णा दे दे दे खो खो खो खो घे इति । श्रयोदगात्यसम्भ्रमावेगामर्षार्यविस्मयोत्साहजो भोगाय तस्य यत् तदुद्धात्य सम्प्रकीर्तितम ॥१९६॥

मोक्षानिदानोमुपदेक्ष्याम । तत्राड्डितद्रुता घ्रां लिडि तिन्ता इति । असतस्थितायां घतलामिति । थपकृष्टायां वघधमिति ॥१९७॥

एवमेते ग्रहा मोक्षा द्रुतपा(क्षा पा) त्राणा गदिता मया ।
निष्कामे च प्रवेशे च आक्षेपिकयन्तरासु च ॥१९८॥

एव तालकलास्वरा(र)ज्ञानेन मार्दङ्गिकेन भवितव्यम भवति चात्र श्लोक ।

अतालकमतालज्ञमशास्त्रज्ञमवादकम् ।
चमघालकमित्येव प्रवदन्ति मनीषिण ॥१९९॥
अनेनैव विधानेन योज्य वाद्य प्रयोक्तृभि ।
अत ऊर्ध्व प्रवक्ष्यामि आतोद्याना तु लक्षणम् ॥२००॥
त्रिविधा(त्रिधा) क्रिया मृदङ्गाना हरीतकियवाश्रया ।
तथा गोपुच्छरूपा च भवत्येषां स्वरूपत ॥२०१॥
हरीतवपाकृतिस्त्वङ्क्या यवमध्यस्तथा स्वक ।
आलिङ्ग्यश्चैव गोपुच्छाकृतिरेषां प्रकीर्तित ॥२०२॥
तालास्त्रयोध्व(ध)तालाश्च मृदङ्गा(ङ्गो)ङ्गिक इष्यते ।
मुखे तस्याङ्गुलानि स्युस्त्रयोदश चतुर्दश ॥२०३॥
ततो(थो)र्ध्वकश्चकतव्यश्चतुस्तालप्रमाणत ।
मुख तस्याङ्गुलानिस्युरष्टावेव समासत ॥२०४॥
पणवश्चापि कर्तव्यो दीर्घत्वे शोडशाङ्गुल ।
कृशो मध्या(ध्ये)ङ्गुलान्यष्टौ पञ्चाङ्गुलमुख त(स्त)था ॥२०५॥

श्रोष्ठस्तस्य च कर्तव्यस्तत्रैरध्यर्धमङ्गुलम् ।
मध्ये तु सुषिरं तस्य चत्वार्येवाङ्गुलानि तु ॥२०६॥

दर्दरस्य शुभकारो भवत्यष्टिमुखस्तथा ।
मुख च तस्य कर्तव्य घटस्य सदृश बुधैः ॥२०७॥

द्वादशाङ्गुलविस्तीर्णं पीनोष्ठ च समासत ।
अत उर्ध्वं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥२०८॥

न ज्वरोपगत चर्म न च काकमुखाहव(वह)म् ।
न मेदोपगत क्लिन्न न च धूमादिदूषितम् ॥२०९॥

षडभिदोषैर्विनिर्मुक्त चर्म निर्वर्तित गवाम् ।
देवताभ्यर्चनं कृत्वा तत स्थाप्य महीतले ॥२१०॥

चित्रायामथवा हस्तेऽहनि पुण्ये शुभौ(भे) तिथौ ।
उपाध्याय शुचिर्भूत्वा कुलीनो रागवर्जित ॥२११॥

घनज्ञो गीततत्त्वज्ञो मधुरो नियतेन्द्रिय ।
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रत ॥२१२॥

मण्डलत्रयमालिप्य गोमयेन सुगन्धिना ।
ब्रह्माण शङ्कर विष्णु त्रिषु तेषु प्रकल्पयेत् ॥२१३॥

आलिङ्गच स्थापयेत् पूर्वं ब्रह्माण पूर्वमण्डले ।
उर्ध्वक तु द्वितीयस्मिन् रुद्रनाम्नि निपातयेत् ॥२१४॥

तिर्यक कृता र्गति सम्यग् वैष्णवे मण्डले न्यसेत् ।
बलिपुष्पोपहारैश्च नानाउर्ध्वविचित्रकैः ॥२१५॥

आलिङ्गे चञ्च(चाञ्ज)लिं दद्यात् मधुपायसमिश्रितम् ।
अपूर्व(पो)ल्लिकामिश्रामालिङ्गे सम्प्रदापयेत् ॥२१६॥

अनन्तर च वातव्यम् सर्वमेवोर्ध्वके बलिम् ।
स्वस्तिकाऽपूपिकापूपरूपकैश्च तिलै सह ॥२१७॥
उन्मत्तकरवीरैश्च पुष्पैरन्यैश्च भूषित ।
बलि कार्य प्रयत्नेन रक्तो रक्ताम्बरं सह ॥२१८॥

वैष्णवे मण्डले स्थाप्य सर्वबीजकृतो हितम् ।
शुद्धस्यालम्बनं पीतं श्वेतभिश्च सहासवं ॥२१९॥
वाचयित्वा द्विजान् स्वस्ति दत्वा पूर्वं च दक्षिणाम् ।
पूजयित्वा च गन्धर्वान् पश्चाद् वाद्य समाचरेत् ॥२२०॥
तन्त्रीभि पणव तु स्यात् समृष्टमा(ष्टा)भि समन्तत ।
घातपुष्करिकाश्चैव योजयेत तत्र कर्मणा ॥२२१॥
मृदङ्गपणवा वापि कर्तव्या दर्दरास्तथा ।
दैवतानि च वक्ष्यानि याय्येषा च भविष्यति(वन्ति हि) ॥२२२॥
लक्षलक्षण शङ्कु कर्णो श्या(भ्रा)मणी च तथा महान् ।
एतास्तु देवता विप्रा मुरजेषु प्रकीर्तिता ॥२२३॥
मृदङ्मयत्वान् मृदङ्ग तु भाण्डो भाण्डकृतीनि च ।
मुरज शुद्धिकरणादातोद्य तोदनात् तथा ॥२२४॥
भाण्डस्यार्थो प्रमाणेन पणवश्च विधीयते ।
वारणाद् दण्डवाद्याना दर्दर परिकीर्तित ॥२२५॥
दृष्ट्वा मृदङ्गपणवदर्दर च महामुनि ।
मेघैस्तु स स्व)रसवादान् मृदङ्गो नाम चाकरोत ॥२२६॥
विद्युज्जिह्वो भवेद्वाद्यो मेघस्य तु महात्मन ।
ऐरावणो महामेघस्तथा चोर्ध्वगतो भवेत् ॥२२७॥
आलिङ्ग्ये च तडित् ख्याता नाम्ना मेघो बलाहक ।
दक्षिणे पुष्करे मेघा(घ) कोकिलो नाम स स्मृत ॥२२८॥
मृदङ्गश्चैव नाम्ना च ऊर्ध्वको नान्ययोच्यते ।
अङ्गार सिद्धिरित्येवमालिङ्गश्चाप्यपिङ्गल ॥२२९॥
तत्प्रियोऽपि बलिस्तेभ्यो दातव्य सिद्धिमिच्छता ।
पूजयित्वा तु ता देवीं प्रेक्षां रङ्गे प्रकल्पयेत् ॥२३०॥
करीषस्य तु सङ्घाते मृदङ्गास्थापयेद् बुध ।
नाटकेऽङ्के प्रकरणे वीथ्या भाणे डिमे तथा ॥२३१॥

मृदङ्गपणवाश्चापि दर्दर चोपकारयेत ।
एवमेतद बुधैर्ज्ञेय मृदङ्गाना तु लक्षणम ॥२३२॥

अत ऊर्ध्वं प्रवक्ष्यामि उपहस्तस्य लक्षणम ।
कर्करी समहस्तश्च हस्तपाणित्रय तथा ।
वर्तना दण्डहस्तश्च पञ्चशिक्षाकरा(र)स्तत ॥२३३॥

तर्जन्यङ्गुष्ठयोगेन सदेशाङ्गुलिभिस्तत ।
पर्यायपतनज्ञया कर्करी हस्तयोर्द्वयो ॥२३४॥

समयो समतालेन द्वयोर्हस्ततलार्धयो ।
पर्यायश प्रपातो य समहस्त इति स्मृत ॥२३५॥

विभावितस्य वामस्य पार्ष्णिनाङ्गुलिभिस्तथा ।
सकृद्दक्षिणहस्तस्य हस्तपाणित्रय भवेत् ॥२३६॥

पूर्वं दक्षिणहस्तेन क्रमाद वामेन वा(पा दत ।
चत्वारो यत्र वर्तन्ते वर्तनाद वर्तना स्मृता ॥२३७॥

प्रथम वामहस्तेन गहीत्वा दक्षिणन तु ।
प्रहारा क्रमपातेन दण्डहस्त समस्तयो ॥२३८॥

सौष्ठव लाघव चव बाहुल्य दृढताऽपि च ।
सर्वेषा चैव हस्ताना गुणाश्चत्वार ईरिता ॥२३९॥

एवमेतन मया प्रोक्त हस्तानामपि लक्षणम ।
अत ऊर्ध्वं प्रवक्ष्यामि वादकाना तु लक्षणम ॥२४०॥

गोलवादकलापातग्रहमोक्षविशारद ।
अथ लघुहस्तच्छिद्रपाणिविधिज्ञ सिद्धिस्थाने ध्रुवाकुशल ।
कलाभिरतो मधुरहस्त कृतिविद्धो मानजो बलवान् ॥२४१॥

सुविहितशरीरबुद्धि ससिद्धो वादक श्रेष्ठ ।
आलेपनप्रमाणज्ञश्चतुर्मार्गकृतश्रम ॥२४२॥

प्रतिग्रहीता सिद्धीनामगदो निश्चलो निपुण ।
शीघ्रो लघुहस्तो विधानविद वादनान्तरे वेदी ।
.. . .. दवरी च प्रशस्यते ॥२४३॥

[प्रतिग्रहीता सिद्धीनामङ्गदोषविवर्जितः ।
निश्चलो निपुण शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवेदी च दर्दरी च प्रशस्यते ।।]

एतत् सर्वं नाट्ययोग समीक्ष्य
प्रोक्त वाद्य सर्वलोकानुमानात् ।।
नोक्त यन मानागमाच्छास्त्रबुध्या
सद्भि कार्यं मार्गजाति समीक्ष्य ।।२४४।।

स्फुटप्रहार विषम विभक्त १
सन्नोऽपि घुष्टारिभित कु(क)ल च ।।
त्रिमार्जन पूरितरागयोग-
मृदङ्गवाद्य गुणतो वदन्ति ।।२४५।।

वाद्येषु यत्न प्रथम तु कार्यं
शय्या च नाट्यस्य वदन्ति वाद्यम् ।।
वाद्येऽविगीतेऽपि च सुप्रयुक्ते
नाट्यस्य शोभा न विनाशमेति ।।२४६।।

इति भरतीये नाट्यशास्त्रे वाद्याध्यायो नाम त्रयस्त्रिशोऽध्याय·

# नाट्यशास्त्रम्

## अथ पञ्चत्रिंशोऽध्यायः

विन्यास भूमिकाना च सम्प्रवक्ष्यामि नाटके ।
[1]यादृशो यस्य कर्तव्यो विन्यासो भूमिकास्वथ ॥१॥
[2]गतिवागङ्गचेष्टाभि सत्वशीलस्वभावत ।
[3]परीक्ष्य पात्र तज्ज्ञस्तु युञ्ज्याद भूमिनिवेशने ॥२॥
तस्मिन्नविज्ञ्य हि गुणवान कार्या(र्य) पात्रसमाश्रया(य)
न खेदजनन बुद्धेराचार्यस्य भविष्यति ॥३॥
[4]आचार्य पात्रजांश्चैव गुणाञ्ज्ञात्वा स्वभावजान् ।
तत कुर्याद् यथायोग नृणा भूमिनिवेशनम् ॥४॥

---

यदभूमिकालाभपरा सदाशिवपदस्थिता ।
तां वन्दे परमा शक्ति चन्द्रमौले परा तनुम ॥

एवमातोद्यपर्यन्त निरूपिते नाट्यविषये यद्यपि न वक्तव्यान्तरमस्ति तथापि कठिनापदेशेनास्य शास्त्रस्य प्रवृत्तेर्नाट्याचार्येणेत्थ भूमिकानिवेश कार्य इति शिक्षयितु समाधानान्तरम । तदाह । विन्यास भूमिकाना चेति । नाट्यस्यावष्ठम्भस्थानमि(मे)व भूमिका । ता(साम)वष्टम्भो हि योग्यबलनिमित्तानुभावहराद् रसभावप्रयोगकौशलमस्येति । नाटकमि(इ)ति ॥१॥

नाट्ये सत्व मानसो हेवाक्र(क)म(स) । शील शारीरआग(मा) हार्यमन्त ॥२॥३॥

स्वाभाविका गुणा सामान्याभिनये व्याख्याता एव । ते यस्य सति(न्ति) ॥४॥

---

१ KSS, यादृशैरेव NS यादृश्यो यस्य कर्तव्या ।
२. NS, गतिर्वाराङ्गैश्चैभि सत्वशीलै समासत ।
३ 'परीक्ष्य पात्र' इत्यारभ्य 'पात्र योज्य स्वभूमिषु' इत्यन्त का० पुस्तके नास्ति ।
४. NS, आधायो यमजा ।

अङ्गप्रत्यङ्गसंयुक्तमहीनाङ्गं वयोन्वितम् ।
न स्थूलं न कृशं चैव न दीर्घं न च मन्थरम् ॥५॥

श्लिष्टाङ्गं द्युतिमन्तं च (विश्लिष्टाङ्गं) सुस्वरं प्रियदर्शनम् ।
एतैर्गुणैश्च संयुक्तं देवभूमिषु योजयेत् ॥६॥

स्थूलं प्रांशु बृहद्देहं मेघगम्भीरनिस्वनम् ।
रौद्रस्वभावनेत्रं च स्वभावभ्रुकुटीमुखम् ॥७॥

रक्षोदानवदैत्यानां भूमिकासु प्रयोजयेत् ।
पुरुषाणां प्रयोगस्तु तथाङ्गक्रिययान्वितः ॥८॥

सुनेत्रसुभ्रुवः स्वङ्गाः सुललाटाः सुनासिकाः ।
स्वोष्ठाः सुगण्डाः सुमुखाः सुकण्ठाः सुशिरोधराः ॥९॥

स्वङ्गप्रत्यङ्गसंयुक्ता न दीर्घा न च मन्थरा[1] ।
न स्थूला न कृशाश्चैव स्वभावेन व्यवस्थिताः ॥१०॥

सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शनाः ।
[2]कुमारराजधर्मौ तु संयोज्याश्च नरोत्तमाः ॥११॥

धर्मैरविकलैर्धीरैः[3] स्फुटं वसनकर्मणि ।
न दीर्घं नैव च स्थूलमूहापोहविचक्षणम् ॥१२॥

---

स्त्रीभूमिकायामिति । कौशिकीप्राधान्यस्यापनाय पूर्वं स्त्रीभूमिकोक्ता ॥५॥

विशि(श्लि)ष्टाङ्गमिति । विभक्ताङ्गम् । रया दीप्त्यात्मकं सन्ततम् । स(सु)स्वरमिति ॥६॥

सुकुमार(त)या च पुरुषाणां य प्रयोगा(गे) भूमिकायोगि(गे)न उपयोगिनो धर्मा उक्तास्त एव प्रियया नद्योपिता युक्ता वर्तव्यास्तेन स्थूला (लमित्यादि) ॥७॥८—१२॥

---

१. NS. दीर्घाश्च मदमन्थरा ।
२. कुमारराजभूमिषु प्रयोज्या भरतोत्तमः ।
३. धीरम् ।

[1]अदीनं च प्रगल्भं च प्रत्युत्पन्नविनिश्चयम् ।
सेनापतेरमात्यानां भूमिकासु प्रयोजयेत् ॥१३॥

पिङ्गाक्षं [2]घोणनासं च नेत्र(ह्रस्व)मुच्चमथापि वा ।
कञ्चुकिश्रोत्रियादीनां भूमिकासु नियोजयेत् ॥१४॥

एवमन्येष्वपि तथा नाट्यधर्मविभागतः[3] ।
[4]देशवेशानुरूपेण पात्रं योज्यं स्वभूमिषु ॥१५॥

मन्थरं वामनं कुब्जं विकृतं विकृताननम् ।
विस्टब्धनेत्रं काणाक्षं स्थूलं चिपिटनासिकम् ॥१६॥

दुर्जनं दुःस्वभावं च [5]विकृताचारमेव च ।
दासभूमौ प्रयुञ्जीत बुधो दासाङ्गसम्भवम्[6] ॥१७॥

प्रकृत्यातिकृशं क्षामं तपःश्रान्तेषु योजयेत् ।
तथा च पुरुषं स्थूलमुपरोधेषु योजयेत् ॥१८॥

---

प्रत्युत्पन्नविनिश्चयमिति । अस्मिति मानवान् (म) सेनापतेरमात्यानामिति पाठे ॥१३॥

त्र्यो घोणमु(नास) च । कुटिला (ना)साऽस्यति ॥१४॥

एवमिति । उक्तव्यतिरिक्ता येऽन्ये तापसप्रभृतयस्तद्विषये नाट्यधर्मेणानुरागेण प्रवेशने कर्तव्ये देशहेत्वाकानुरूप्येण वयोवर्णाश्रमादिरूपावस्थो विचित्रानवस्थोचिताय भूमिक मुपयोजयेत् ॥१५॥१६—१७॥

अ(उ)परा(रो)धष्विति ॥१८॥

---

१ NS अहीनं च प्रगल्भं च प्रत्युत्पन्न ।
२ दीर्घनासं च ।
३. प्रवेशने ।
४. दशावस्थानरूपेण पात्रं युञ्ज्यात् ।
५ विकृताकारमेव च ।
६. संयुतम् ।

यदि वा [1]नेदृशा सन्ति प्रकृत्या पुरुषा द्विजा ।
आचार्यबुद्धया योज्यास्तु भावचेष्टास्वभावत ॥१९॥

या यस्य सदृशी चेष्टा ह्युत्तमाधममध्यमा ।
सा [2]तथाऽऽचार्ययोगेन नियम्या(ऽ)भावभाविनी[3] ॥२०॥

अत पर प्रवक्ष्यामि भरताना विकल्पनम् ।
भरताश्रयाश्च भरतो विदूषक सो(कस्तो)रिकस्तथा नान्दी(को नटो वादी)।
नन्दी ससूत्रधारो नाट्यरसो(करो) नायकश्चैव ॥२१॥

मुकुटाभरणविकल्पौ वि(ल्पवि)ज्ञेयो(या) माल्यवस्तुविविधैश्च ।
कार(रु)ककुशीलवाद्या विज्ञेया नामतश्चैव ॥२२॥

धुर्यवदेको यस्मादुद्धारोऽनेकभूमिकायुक्त ।
भाण्डग्रहोपकरणैर्नाट्य भरतो भवेत् तस्मात् ॥२३॥

लोका(क)हृदाश्रयकृता(ता)सर्वप्रकृतिप्रचारसयुक्ता(म्) ।
नानाश्रया प्रकुरुते तथा च नारी तु सर्वत्र ॥२४॥

---

अत परिजनभूमिकाध्याय यदि तु स्वभावतस्तादृग्(न) भवति तदा भूमिकास्वभावोचिता चेष्टा आचार्या(र्यबुद्ध)या कार्या । चेष्टाग्रहणेनाकारादपि प्रतिशीर्षकादिना कर्तव्यमिति लक्ष्यते ॥१९॥

सा चेष्टाऽऽचार्येण नियमनीया । तथा सत्यभावेऽपि भवा(भावि)नी भवित्री भवति । भावरचारत्वादिक भावयति रसार्णव(ना)पि विरौति तच्छीला ॥२०॥

भरतानामिति । नाट्योपयोगिनाम । इयता परिकरेण विना नाट्य तु न निर्वहतीत्येतावदवश्याहरणीयमिति भाव ॥२१—२२॥

स्वधुर्य(धुर्य)वदिति । य सर्वत्र प्रतिज्ञागर्भितरसभरोद्वहनाद्धरत्वच्छेदै-

---

१. NS नेतरा ।
२ KSS तथा चान्ययोगेन ।
३ अत्र १२ का० पुस्तके 'एवम-येष्वपि' इत्यादय ५६ श्लोका अधिका ।

प्रत्युत्पन्नप्रतिभो नर्मकृतो नर्मगर्भनिर्भेद ।
[1]छेदविदूषितवचनो विदूषको नाम विज्ञेय ॥२५॥

तूर्य(प)ति(यं)स्तु नर सर्वातोद्यप्रवादने कुशल ।
[2]तूरपरिग्रहयुक्तो विज्ञेयस्तौरिको[3] नाम ॥२६॥

नटनृति(त्तौ) धात्वर्थोय भूत नाटयति लोकवृत्तान्तम् ।
रसभावसत्वयुक्त यस्मात् तस्मान्नटो भवति ॥२७॥

स्तुत्यभिवादनकृतंमधुरंवाक्यं सुमङ्गलाचारं ।
सर्वं स्तौति हि लोक यस्मात् तस्माद्भवेद्वादी ॥२८॥

भावेभ्यो बहुधाऽस्मिन् रसा(नसौ) वदति नाट्ययोगेषु ।
प्राकृतसंस्कृतपाठ्यो नन्दी नामेति स ज्ञेय[4] ॥२९॥

[5]गीतस्य च वाद्यस्य च पाठ्यस्य च नैकभावविहितस्य ।
[6]शिष्टोपदेशयोगात् सूत्रज्ञ सूत्रधारस्तु ॥३०॥

यस्मात् यथोपदिष्टान् [7]रसाश्च भावाश्च सत्वसयुक्तान् ।
भूमिविकल्पैर्नयति च नाट्यकर कीर्तितस्तस्मात् ॥३१॥

चतुरातोद्यविधान सर्वस्य तु शास्त्रवे (वे)दविहितस्य ।
[8]नाट्यस्यान्त गच्छति तस्माद्वै नायकोऽभिहित ॥३२॥

नानाप्रकृतिसमुत्थ करोति य शीर्षक मुकुटयोगे ।
विविधैर्वर्णविशेषै स च(मु)कुटकारस्तु विज्ञेयः ॥३३॥

---

गीतिविविध कृत्वा दूषितादिवाचयैवानुभावादिप्रतिजागर कुर्वता(प्र)न्यरस ॥२३॥२४—३३॥

---

१. NS. छेदविभूषितवचन ।
२. तूरपनिग्रहयुक्त ।
३. रिपो नाम ।
४. विज्ञेय ।
५. गानस्य ।
६. शास्त्रोपदेशयोगात् ।
७. सात्वभावाद्यसत्त्वयुक्तान् ।
८. गच्छति यस्मान्नाट्ये तस्माद्वैनायको भवति ।

[भाण्डवाद्यज्ञा या लयतालज्ञा रसानुविद्धा च ।
सर्वाङ्गसुन्दरी यं यत्संस्था नाटकीया तु] ॥३४॥

वस्त्याभरणं कुर्याद् बहुविधविहितं स चाभरण (·)[1] ।
[2]वस्त्रोपकरणयोगात् स तेन नाम्नाऽभिधातव्य ॥३५॥

यो यं माल्यं कुरुते पञ्चविधं माल्यकृत् स विज्ञेयं ।
सज्जापि वेषयोगं कुरुते स च वेषकारी तु[3] ॥३६॥

चित्रज्ञश्चित्रकरो यस्तस्य [4]रञ्जानात्तथा रजक ।
जतुरमतीरमधर्ठैईखकर्ट (र) कारुवर्चैव ॥३७॥

नानातोद्यविधाने प्रयोगयुक्त प्रवादने कुशल ।
अतोद्येऽव्यतिकुशलो यस्मात् स कुश (शी)लवा ज्ञेय[5] ॥३८॥

[6]यद्यत् समाश्रयन्त शिल्प वा कर्म वा प्रयोग वा ।
तत्तेवोपगतगुणा विज्ञेया नामत पुरुषा ॥३९॥

एव तु नाट्यविधौ जातिर्नरसश्रया बुधर्ज्ञेया ।
[7]नाट्योपकरणयुक्ता नानाशिल्पप्रसक्ता च ॥४०॥

[उक्तोऽत्र भूमिकान्यास प्रयोक्तारश्च योगत ।
आदिष्ट नाट्यशास्त्र च गुह्य किम्भिहोच्यताम्] ॥४१॥

इति भरतीये नाट्यशास्त्रे भूमिकाविकल्पाध्याय: पञ्चत्रिंश ॥

---

पञ्चविधमित्याहार्याभिनये दर्शितम् ॥३६—३७॥

कुशा (न् ला) शीति कुशल (.) । निर्ल्ठिलक्षणा । तेषां लावण्या (न्या)-दियग् । अत एव कुशजाति कुशि कुर्वी(शा) यो लुनाति अयोविकारमपि यश्छिनत्ति स कुशीलव । उपचारात् कर्मणि पुनर्नाट्योपकरणयुक्तनापि नटविदूषकादि-शिल्पप्रयोक्ता(क्तृ) कु(कु)टया दि(दावि)ति शिवम् ॥३८—४१॥

इत्यभिनवगुप्ताचार्यविरचितायां नाट्यवेदवृत्तावभिनवभारत्यां
भूमिका(वि)कल्प पञ्चत्रिंश ॥

---

१. NS. चाभरणम् ।
२. कर्ता वस्त्रोपकरणयोगास्स तेन नाम्ना विधातव्य ।
३. स च वेषकरस्तु विज्ञेय ।
४. रञ्जनाद्भवत् ।
५. कुशीलवस्तस्मात् ।
६. यद्यत् समाचरन्ते ।
७ नाम्नोपकरणयुक्ता नानाशिल्पसुयुक्ता च ।

# नाटयशास्त्रम्

## अथषट्त्रिंशोऽध्याय

[[1]अथात्रेयो वसिष्ठश्च पुलस्त्य पुलह क्रतु ।
अङ्गिरा गौतमोऽगस्त्यो मनुरायुस्तथात्मवान ॥१॥
विश्वामित्र स्थूलशिरा सर्वात (त )प्रमतिदनु ।
उशना बृहस्पतिर्व्यासश्चावन काश्यपो ध्रुव ॥२॥
दुर्वासा जामदग्न्यश्च मार्कण्डेयोऽथ गालव ।
भरद्वाजश्च रैभ्यश्च यवक्रीतस्तथैव च ॥३॥
स्थूलाक्ष शकलाक्षश्च काण्वो मेधातिथि क्रतु ।
नारद पर्वतश्चैव सुवर्मोऽथैकजो द्विज ॥४॥
नितम्बुर्भुवन सौम्य शतानन्द कृतव्रण ।
जामदग्न्यस्तथा राम कचश्चेत्येवमादय ] ॥५॥

एव ते(तु) मुनय श्रुत्वा[2] सर्वज्ञ भरत तत ।
पुनरूचुरिद वाक्य कुतूहलपुरोगमम ॥ ॥

यस्त्वया गदितो ह्येष नाटयवेद पुरातन ।
एकचित्तै स चास्माभि[3] सम्यक समुपधारित ॥७॥

---

यस्मिन निगूढपरमार्थमबुध्यमाना
ससारनाटयरसभावमुपाश्रयन्ते ॥
बुध्वा पुनर्मुहुरहो निजमेव यान्ति
तत पूर्णधाम शिवतत्त्वमह प्रपद्ये ॥

यदिद नाटयमुक्त तस्य रसभावरूपनाप्रतिपादने नियतानुकारतानुकारितैव चाविनस्य निरन्धाह्या(स्या)यत पूर्वरङ्गस्य न नाटयरूपतेत्युक्तम् । तदेतदिहाध्याये प्रश्नोत्तरमुखेनेनिहामस्या स्फुटीक्रियते । न तत्र प्रथम पूर्वरङ्ग एव नाटयत्व तावदाचक्षते । तत्पूर्वकत्वान्नाटय ततोऽप्यनुकारकथा निरस्यते ॥१—५॥

---

१ एतानि कोष्ठबद्धपद्यानि पुस्तकान्तरे न पठितानि ।
२ KSS पीना ।
३ KSS सहास्माभि NS सदास्माभि ।

एकश्च सहायोऽस्माक त नो व्याख्यातुमर्हसि ।
को वाऽन्यो नाट्यवेदस्य निश्चय वक्तुमर्हति[1] ॥८॥
न वय परिहासेन[2] न विरोधेन नेर्ष्यया ।
[3]पृच्छामो भगवन् नाट्यमुपदेशार्थमेव तु ॥९॥
अस्माभिश्च तदा नोक्त कथाच्छेदो भवेदिति ।
[4]इदानीं तूपशिक्षार्थं नाट्यगुह्य निदर्शय ॥१०॥
लोकस्य चरित नाट्यमित्यवोचस्त्वदी(स्त्वमी)दृशम् ।
तेषां तु (शेषाणा) लोक(क)गुह्याना निश्चय वक्तुमर्हसि ॥११॥
देवस्य(लोकस्य) कस्य चरित पूर्वरङ्गे द्विजर्षभ ।
किमर्थं [5]मुच्यते ह्येष प्रयुक्त कि करोति वा ॥१२॥
कस्माच्चैव पुन शौच सम्यक चरति सूत्रधृक्[6] ।
कथमुर्वीतले नाट्य स्वर्गान्निपतित विभो ॥१३॥

---

तत्र प्रश्न तावत् दर्शयति । एव तु मुनय इति ॥६॥७—८॥

तत्र यान्या परिहासप्रायनाट्यशास्त्रविरुद्ध च नाट्यतो यन्त्रितापर्यन्त इति वचनात् नटाना जीविकोपायोऽयमित्याशङ्का वारयति । परिहासेनेत्यादिना ॥९॥

तप (तूप)शिक्षार्थमिति । तत्त्वनिर्णयार्थमित्यर्थ । नाट्यगुह्यमिति । नाट्ये यत् तात्पर्याच्छद्यर्थं गुह्यम् ॥१०॥

शेषाणां लोकगुह्यानामिति । लोके यानि दृश्यन्ते अथ च पूर्वरङ्गे क्रियन्ते तैस्तावल्लोके चरितैर्भवितव्यम् । लोकस्य चरित यतो नाट्यमतो लोकगुह्यानामिति साभिप्रायेणाध्यारोपेण(प)गर्भमुक्ति ॥११॥

तथा चाह । लोकस्य कस्य चरितमिति । परिदृश्यमानस्य भावना । एतच्चरित न नून गूढोऽ(क्रम)त कश्चिल्लोकोऽस्तीत्यादय । दृश्य सर्वं च यदिति स(स्व)र्गं एवैतन्नाट्य सकल मुखस्थाने । अति च (तश्च) नोपदेशो यत्तयोरुपदेशो मत्यं" ॥१२॥

तत्र कथमेतत तदाह । कथमुर्वीतल इति ॥१३॥

---

१. NS. को वान्यो यन्निवेद्यस्य निश्चय वेत्ति तत्त्वत ।
२. KSS, परिमात्रन । NS परिहासेन विरोधेन च नान्यथा ।
३ NS, दृच्छामो । KSS ""मुपदेशाभिपूर्वकम् ।
४. KSS, तत्सर्वं निखिलेनेद । NS. इदानी त्वहृशिक्षार्तं ।
५. NS युज्यते घोपप्रयुक्त ।
६. KSS, कस्माद्देव पुन शौच श्रुत "। NS. कस्माच्चैव मुनि शौच शुचि "'।

कथं तवाऽयं वंशश्च नटसंज्ञः प्रतिष्ठितः ।
सर्वमेव यथातत्त्वं कथयस्व महामुने ॥१४॥

[1]भरत उवाच—

[तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं गुह्यार्थाभिनयं प्रति ॥]

[2]ब्रवीमि वः कथां गुह्यां यन् मां पृच्छत् सुव्रताः ।
पूर्वरङ्गविधानस्य तां च मे सन्निबोधत ॥१५॥

प्रोक्तवानस्मि यत् पूर्वं [3]शुभं विघ्ननिबर्हणम् ।
तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्तितः ॥१६॥

शस्त्राणां [4]प्रतिकारार्थं शरीरावरणं यथा ।
[5]क्रियते हि यथा पापं हुतेनैव प्रशाम्यति ॥१७॥

एवं जप्यैश्च होमैश्च देवताभ्यर्चनेन च ।
सर्वातोद्यविधानैश्च तथा गीतस्वनेन च ॥१८॥

स्तुत्याशीर्वचनैः शान्तैः कर्मभावानुकीर्तनैः[6] ।
[7]मया पापापहरणे कृते विघ्ननिबर्हणे ॥१९॥

स्तुतिगीताभिसंसृष्टैर्वेदैरभिहितोऽभ्यहम् ।
[8][नितरां परितुष्टाः स्म प्रयोगेणामुना च ते ॥२०॥

---

नाट्यवेदविद् त्वदीयो वंशो नटसंज्ञाया(ज्ञया) मूर्खत्वेन कथं प्रसिद्धम् ( ) । यद्यपि बहवः प्रश्नास्तथापि नाट्यविषयोऽयं संशयः एको बहुधर्मविषयो यथा स्थाणुर्वा नभो वोच्चशिलादावेव कुशलं वेत्येक एव संशयः ॥१४॥

गुह्यार्थस्याभिनयम् प्रथममेतदर्थमिति यावत् । अन्ये तु गुह्यार्थो यत्र तादृगभिनयो नाट्यं तम् ॥१५॥

प्रविध्नन्ति । निर्बह(बर्ह)णं रङ्गपूजनम् । तस्यानुबन्धेन तत्प्रसङ्गेन ॥१६॥

शरीरावरणं कवचानि(दि) ॥१७॥१८—२०॥

---

१. NS. does not read
२ NS., कथयामि KSS ब्रवीमि वो ह्यय विप्रा ः।
३. KSS. यत्पूर्वमह ।
४ KSS प्रतिहारार्थं शरीराचरण यथा ।
५ KSS तथा सर्वगत पाप स्मृतेनैव प्रशाम्यति ।
६ KSS कीर्तनात् ।
७. NS, मया पापापकरणे KSS. मया च पापहरणे ।
८. KSS. does not read

देवतासुरमानन्द यस्माल्लोकश्च(क च) नन्दति ।]
तस्मादय प्रयोगस्तु नदिनाम्ना(नान्दीनामा) भविष्यति ॥२१॥

[1]गीतवाद्यानुनादो हि यत्र काकुस्वन(र) शुभ ।
तस्मिन देशे विपाप्मानो म(मा)ङ्गल्यश्च(ञ्च) भविष्यति ॥२२॥

यावत्त पूरयेद देश ध्वनिर्नाट्यसमाश्रय[2] ।
[3]न(स्था)स्यन्ति हि रक्षासि त देश न विनायका ॥२३॥

आवाहे च विवाहे च यज्ञे नृपतिमङ्गले ।
नान्दीशब्दमुपश्रुत्य हिस्रा नश्यन्ति चैव हि ॥२४॥

पाठ्य नाट्य तथा गेय चित्रवादित्रमेव च ।
वेदमन्त्रार्थवचनै· [4]सम ह्येतद भविष्यति ॥२५॥

श्रुत मया देवदेवात् तत्वत शङ्कराद्धितम्[5] ।
स्नानजप्यसहस्रेभ्य पवित्र गीतवादितम्[6] ॥२६॥

[7]यस्मिन्नातोद्यनाट्यस्य गीतपाठ्यध्वनि शुभ ।
भविष्यत्यशुभ देशे नैव तस्मिन कदाचन ॥२७॥

एव पूजाधिकारार्थं पूर्वरङ्ग कृतो मया ।
नाना स्तुतिकृतैर्वाक्यैर्देवताभ्यर्चनेन च ॥२८॥

---

नान्दीनामेति । नन्दनात् । अत एव नान्द्यन्त इति पूर्वरङ्गान्त इत्यर्थं ॥२१॥

काकुस्वर इति । पूर्वरङ्गमिध्यर्थं पाठ्यम् । तत शङ्गाररसयुक्ता पठेवार्यामित्यादौ (ना ना ५—१२२) । न त (तु) सदैव देवेन परतन्त्रीकृतस्य कदाचिद् द्विजन्मादेरिति वाद्याद्युपभोगावसर ॥२२—२३॥

ततो वेदविरुद्धमित्याशङ्क्याह । आवाहे च विवाहे चेत्यादि ॥२४॥२५॥

---

१ NS, गीतावाद्यात्तु नान्दी हि KSS गीतवाद्यानुनादी च ।
२ KSS ध्वनिरातोद्यसश्रय ।
३. KSS तावत्ताना शुभ किञ्चित न च विघ्नविनायका ।
४ KSS तथैव च ।
५ NS, भवत· शकरोदितम् KSS ततश्च शकरोदितम ।
६. NS, यत्र सगतीवादितम् । KSS श्रेष्ठ मे गीतवादितम् ।
७. KSS यस्मिन्नातोद्यनाट्यस्यो गीतवाद्यश्च निश्चय ।

यतोऽभिवादन विलष्टं शिष्ट तद्रङ्गमण्डले[1] ।
[ततस्तस्य हि तच्छौच विहित तु द्विजोत्तमा ॥२९॥
शौच कृत्वा यतो मन्त्र पूजन जर्जरस्य तु ।
उच्यते पूर्वरङ्गेऽस्मिन् तस्माच्छौच प्रकीर्तितम् ॥३०॥
यथावतारित चैव नाट्यमेतन् महीतले ।]
[2]वक्तव्य सर्वमेतद्धि न शक्य हि निगूहितुम् ॥३१॥
[3]मर्मैते तनया सर्वे नाट्यवेदसमन्विता ।
सर्वलोक(क)प्रहसनैर्बाधन्ते नाट्यसश्रयं[4] ॥३२॥
कस्यचित्त्वथ कालस्य शिल्पक ग्राम्यधर्मकम्[5] ।
ऋषीणा व्यङ्ग्यकरण दुर्वदभिर्गणसश्रयम् ॥३३॥
[6]अश्राव्य तद दुराचार ग्राम्यधर्मप्रवर्तितम् ।
निष्ठुर चाप्रस्तुत च काव्य ससदि योजितम्[7] ॥३४॥
तच्छ्रुत्वा मुनय सर्वे भीमरोषप्रकम्पिता ।
ऊचुस्तान् भरतान् क्रुद्धा निर्दहन्त इवाग्नय ॥३५॥

---

आरा(ग)मित्त्वमस्यार्थस्याह । श्रुत देवादिदेव(वात्)तस्य(त) शङ्करादिद-मुत्कृष्टमिति ॥२६॥२७—३१॥

भूस्पर्शादपवित्रीभूत तदेव पवित्रीभूत प्रहसनं '' · बाधन्त इति । तच्च नाट्यस्याविदन्तो नियतमनुकरणीय मन्यमाना । परचेष्टानुकरणोल्लास इति नीत्या सर्वे प्रहसितवन्त इति । साय प्रतिपन्ना इति निन्दार्थत्वात् त एत एतत्पक्ष प्रतिक्षेप-कृदुत्पत्तिविघात निन्दार्थस्वादेता नाट्योत्पत्तावेव दर्शित र(व्य)ङ्गकरणमिति ॥ ३२॥३३—३५॥

---

१. KSS. शिरसा रङ्गमण्डले NS. शित तद्रङ्गमण्डले ।
२. KSS. तथा विधिसमापन्नम् न शक्य विनिगूहितम् ।
३. NS. सर्वमेतत्तया सर्वे ।
४ KSS बाध्यन्ते हास्यसश्रयं । NS. वाद्य तेनाद्य सश्रये ।
५. KSS. शिल्पकर्म ममाम्यघात् ।
६. KSS. अग्राह्य सुदुराचार ।
७ NS ससद्वियोजितम् ।

मा तावद् भो द्विजा युक्तमिदमस्मद्विडम्बनम् ।
को नामाथ परिभव किञ्च नास्मासु सम्मतम्[1] ॥३६॥
यस्माद् ज्ञानमदोन्मत्ता न वेत्याऽ(विद्या न) विनयाश्रिता[2] ।
तस्मादेतद्वि(द्वि) भवतां(ता) कुज्ञान नाशमेष्यति ॥३७॥
ऋषीणां ब्राह्मणानां च समवायसमागता( )[3] ।
[4]निर्व्रताश्च(निराहुता) विना होमं शूद्रचारा भविष्यथ ॥३८॥
अपाङ्क्तेया कुत्सितास्त्वावमा एव भविष्यथ ।
यश्च वो भविता वंश सर्वाशौचो भविष्यति ॥३९॥
ये च वो वंशजास्तेऽपि भविष्यन्त्यथ नर्तका ।
परोपस्थानवन्तश्च शास्त्रपण्योपजीविन[5] ॥४०॥
*शाप दत्त तथा श्रुत्वा सुतानां मम देवता (सुतेभ्यो मे तदा सुरा)* ।
सर्वे विमनसो भूत्वा तान्पुत्रीन् समुपस्थिता ॥४१॥
[6]समस्तैश्च त(याचमानैस्त)त प्रोक्त देवै शक्रपुरोगमै ।
इदानीं तु समुत्पन्न नाट्यमेतद विनङ्क्ष्यति ॥४२॥

---

विडम्बक(न) गण्डसद्य(श्र)यमिति । गण्डवदन्यापदेशमुखेनेत्यर्थ ॥३६॥

ज्ञानमदे(दोन)मत्ता इति । मिथ्या ज्ञानमिद युष्माकमिति पर्यवसितमिति भाव । विद्या ब्रह्मणा । वेदब्राह्मा ॥३७॥

निराहृता परिभवभाज ॥३८॥३९—४०॥

सुरा इन्द्राद्या ॥४१॥
याचमानैरिति । ऋषीन् प्रार्थयद्भि(द्भिरु)क्तम् ॥४२॥

---

१ NS किंवा नास्मासु समते । KSS किंवा नाम्नाभिसगनम् ।
२. NS चेच्छाविनयान्विता ।
३. NS समवायसमागमे KSS समवायोऽयं सगमे ।
४. NS निर्ब्रह्मणो निराभूत शूद्राचारो भविष्यति । KSS निर्ब्रह्माचरणभूत्वा शूद्रचारा भविष्यथ ।
५. NS पुस्त्रीबालोपजीविन ।
६. KSS तावद्भिश्च तथा प्रोक्त ।

ऋषिभिश्च ततः प्रोक्तं न चैतद्धि विनङ्क्ष्यति[1] (न त्वेतद्धि विनशिष्यति)।
शेषमन्यत्र यत् प्रोक्तं सर्वमेतद् भविष्यति ॥४३॥

एतच्छ्रुत्वा तु वचनं मुनीनामुग्रतेजसाम् ।
विषण्णास्ते ततः सर्वे मत्वा मां समुपस्थिताः ॥४४॥

[2]प्रोक्तवन्तश्च मां पुत्रास्त्वयाहो नाशिता वयम् ।
अनेन नाट्यदोषेण शूद्राचारा हि यत् कृताः ॥४५॥

मयापि सान्त्वयित्वोक्ता मा क्रोधं प्रगतानघाः ।
[3]कृतान्तविहितोऽस्माकं नूनमेव विधिः सुताः ॥४६॥

मुनीनां न मृषा वाक्यं भविष्यति कथंचन ।
निधने च मनो मा भूद् युष्माकमिति सान्त्विताः ॥४७॥

आनीय तस्मा नाट्यं ब्रह्मणा सम्प्रवर्तितम् ।
शिष्येभ्यश्च तदन्येभ्यः प्रयच्छाम प्रयोगतः ॥४८॥

---

तत्र कुमतानियनाकारमभागोचितं स्वस्थितरसभावप्रयोगेऽवस्थाप्यत इत्याह न त्वेत(तद्)विहित(विनशिष्यति) ॥४३॥४४—४६॥

निधने आत्महनने ॥४७॥

आनीय(आनी)य तस्मा नाट्यमिति । तस्यापरिज्ञानादयं भवति शापो जात इदानीमत्रैव तत्त्वपरिज्ञानं रसभावस्वरूपे यत् तच्च दर्शितं विततं रसाध्यायादौ- (भा. ना ६) तत्र कैश्चिद् वार्तिककारीयं श्लोकद्वयं सूत्रग्रन्थमध्ये प्रक्षिप्तम् ।

नाट्यस्य ज्ञाततत्त्वस्य यथोक्तं प्रयोजनम् ।
तत्त्वतस्तदनिर्णीतं शापान्यायेन वर्जितम् ॥

इत्यादि । रसप्राधान्यमेवाह ।

यथास्त(स्वा)दप्रसङ्गेन सुधास्पर्शोपयोगिता ।
यास्वादकानां प्रोत्यर्थं केवलं रसबोधनम् ॥

---

१ NS. न हि त्वद्धि वस्यति KSS. न चैद्धि विनश्यति ।
२ KSS varies.
३. NS कृतानुविहितोऽस्माकं ।

मा वै प्रणश्यतामेतनाट्य कुलप्रवर्तितम् ।
महाश्रय महापुण्य वेदाङ्गोपाङ्गसभवम् ॥४९॥
अप्सरोभ्य इव चैव यथातत्त्व यथाश्रुतम ।
नाट्य दत्त्वा तत सर्व प्रायश्चित्त चरिष्यथ[1] ॥५०॥

॥इति भरतीये नाट्यशास्त्रे नाट्यशापो नामाध्याय षट्त्रिंश ॥

---

न च जीविकादक्षिणेन च योग इति भाव ॥४८—४९॥

स्त्रीणा च न कश्चनास्य प्रयोगे वेदार्थत्यागशङ्कावकाश इति दर्शयति । इद नाट्यमप्सरोभ्यो दत्त्वा प्रायश्चित्त चरिष्यथेति । येन च भावलाभाद्भ-(भवल्लाभो) भविष्यति ॥५०॥

इत्यभिनवगुप्ताचार्यविरचिताया नाट्यवेदवृत्तावभिनवभारत्या
नटशापाध्याय षट्त्रिंश ॥

---

१ NS चरिष्यति ।

## अथ सप्तत्रिंशोऽध्यायः

कस्यचित्त्वथ कालस्य नहुषो नाम पार्थिवः ।
[1]प्राप्तवान् देवराज्यं हि नयबुद्धिपराक्रमैः ॥१॥

प्रशशास तदा राज्यं देवैर्व्यप्रैश्च प्राप्नुवन् ।
गान्धर्वं चैव नाट्यं च [2]दृष्ट्वा चिन्तामुपागमत् ॥२॥

[3]स चिन्तयित्वा मनसा कथमेव गृहे मम ।
नाट्यप्रयोगो हि भवेदिति सादर एव सन् ॥३॥

कृताञ्जलि प्रयोगार्थं प्रोक्तवांस्तु सुरान् नृप[4] ।
अप्सरोभिरिदं सार्धं नाट्यं भवतु मे गृहे ॥४॥

[5]प्रत्युक्तो(क्तश्च) ततो देवैर्बृहस्पतिपुरोगमैः ।
दिव्याङ्गनानां नैवेह मानुषैः सह सङ्गतिः ॥५॥

---

आकाङ्क्षाणां प्रशमनविधे पूर्वभावाद्यपीता
धाराप्राप्तस्तुतिगुरुगिरा गूह्यतत्त्वं प्रतिष्ठा ।
ऊर्ध्वाधस्य (धो य) परभवि(च) वा यत समानं चकास्ति
प्रोद्दानन्त तदहमधुनाऽनुत्तरं धाम वन्दे ॥

अथ यद्वशान्नाट्यशास्त्रमुपादेयं तदपन्शसम्भवमूलभूयिष्ठभूतं भूलोकावतरणं नाट्यस्येतिहासं प्रदर्शयन्निःशेषोपजन्य(न्य)त्वं च गूढत्वेनोपदेशरूपस्य सारभागस्य तत्त्वस्य कथनाद् गुह्यतत्त्वकथनमध्यायमारभते । कस्यचित्त्वथ कालस्य नहुष इति ॥१॥

कालेन प्रयुक्तो यतो देवराज्यं चकार ततस्तत्सम्बन्धित्वेनोक्तं गान्धर्वमिति । तत नाट्यं स्वर्गे दृष्ट्वा बद्धमिति शिष्टम । ततोऽप्सरस एवमन्येऽवतरन्त्वित्यर्थः ॥२॥३—६॥

१ NS प्राप्त वा देवराज्य ।
२ NS दृष्ट्वा ।
३ NS इष्टचिन्तामु KSS varies
४ NS नृपरान् नृप KSS प्रोक्तवानमरान् नृप ।
५ का० पुस्तके तु अध्यायान्तमेव पाठो भिद्यते ।

हित पथ्य च बकुल्यो भवान् स्वर्गाधिपो(हि यत्) ।
आचार्यास्तत्र गच्छन्तु गत्वा कुर्वन्तु ते प्रियम् ॥६॥
प्रोक्तवांस्तु ततो मां तु नृपति स कृताञ्जलि ।
इदमिच्छामि भगवन् नाट्यमुर्व्यां प्रतिष्ठितम्[1] ॥७॥
पूर्वमाचार्यकं चैव भवताऽभिहित(हि प्रति)श्रुतम्[2] ।
व्यक्तमायातिविद लब्ध स्वत्सकाशाद् द्विजोत्तम ॥८॥
पितामहगृहेऽस्माक(ऽस्माभिरे)तदन्त पुरे जने ।
पितामहक्रियापुत्रमुर्वश्यां[3] सम्प्रवर्तितम् ॥९॥
तस्या प्रणाशशोकेन उन्मादोपर(प)ते नृपे ।
विपन्नेऽन्त पुरजने पुनर्नाशमुपागतम् ॥१०॥
[4]प्रकाशमेतदिच्छामो भूयस्तत् सम्प्रयोजितम् ।
तिथियज्ञक्रियास्वेतद यथा स्यात् मङ्गलं शुभं ॥११॥
तस्मिन्(स्मात्) मम गृहे यद नानाप्रकृतिसम्भयम् ।
[5]स्त्रीणां ललितविन्यासैर्यतो न प्रथयिष्यति ॥१२॥
तथाऽस्त्विति मया प्रोक्तो नहुष पार्थिवस्तदा ।
सुतास्त्वाहूय सम्प्रोक्ता सामपूर्वं सुर्ते सह ॥१३॥

---

आमिति भरतमुनिम् ॥७॥

प्रतिश्रुतमङ्गीकृत व्यक्ततामवलम्ब्येति । व्यक्तीभूत तु त(त्व)त्सकाशात् ॥८॥

पितामहगृहे ब्रह्मलोके यत् तदस्माभिरिति मर्त्येऽन्त पुरजने लब्ध दृष्ट चेत्याह । पितामहक्रियापुत्रकर्मण्या यद्ब्रह्मणा कृत तदुर्वश्यां सत्यां सम्प्रवर्तित पुरूरवसो गृहेऽवतीर्णम् ॥९॥

तस्या प्रणय(या)पला(ली)यमान स्वर्गगमनम् जातम । स्वात्मने प्राणार्पवे प्रणयिनि नृपे पुरूरवसि वि(प)ने(न्ने) योऽपि च तत्परिजन सोऽपि विवि(प)न(न्न) इति प्राणसन्न(ष्ट)न(ट) नाट्यमस्मात्म् ॥१०॥११—१६॥

---

१. NS प्रवर्तितम् ।
२. भवतो हि प्रतिश्रुतम् ।
३. पूर्वस्यां ।
४ प्रणाशमेतदिच्छामि ।
५. स्त्रीणां ललितविन्यासं प्रणाशो नाशयिष्यति ।

अय हि नहुषो राजा याचते न कृताञ्जलि ।
गम्यता सहितैर्भूमि प्रयोक्तु नाट्यमेव च ॥१४॥
करिष्यामश्च शापान्तमस्मिन सम्यक् प्रयोजिते ।
ब्राह्मणाना नृपाणा च भविष्यथ न कुत्सिता ॥१५॥
तत्र गत्वा प्रयुज्यन्ता(ध्व)प्रयोगान वसुधातले ।
न शक्य चान्यथा कर्तु वचन पार्थिवस्य हि ॥१६॥
अस्माक चैव सर्वदा नहुषस्य महात्मन ।
आत्मो(प्तो)पदेशसिद्ध हि नाट्य प्रोक्त स्वयभुवा ॥१७॥
शेषमुत्तरतन्त्रेण कोहलस्तु करिष्यति ।
प्रयोग (गान)कारिकाश्चैव निरुक्तानि तथैव च ॥१८॥
अप्सरोभिरिद सार्धं क्रीडनीयकहेतुकम ।
अधिष्ठित मया स्वर्गे स्वातिना नारदेन च ॥१९॥
ततश्च वसुधा गत्वा नहुषस्य गृहे द्विजा ।
स्त्रीणा प्रयोग बहुधा बद्धवन्तो यथाक्रमम ॥२०॥
अत्रोपभोगतस्ते तु मानुषीषु मामात्मजा ।
बद्धवन्तोऽधिकस्नेह तासु तत्र द्विजसत्तमा (तेषु तेषु द्विजोत्तमा) ॥२१॥
पुत्रानुत्पाद्य वध्वा च प्रयोग च यथाक्रमम् ।
ब्रह्मणा समनुज्ञाता प्राप्ता स्वर्ग पुन सुता ॥२२॥
एवमुर्वीतले नाट्य शिष्यै समवतारितम ।
भरताना च वशोऽय भविष्य च प्रवर्तित ॥२३॥

---

प्रयोज्यस्त्वेन वाद्य(नाट्य) ब्रह्मणैवोक्तमित्यलङ्घ्योऽयमिति भाव इति शेष ॥१७॥

कोहल इति । यदस्माभिर्लोकानुमानादिसिद्धत्वे नोक्त निमित्त इति ॥१८॥

उत्सर्गे तु नोपदेशफलमपि तु क्रीडनीयकहेतुकम् । रसचर्वणापात्रसारमननुवृत्या विभावानुभावनभागमते बमफलमम्व-बावबोधविश्रान्त नत्र भरतस्वापि । नारदैर(वेना)प्सरोभिश्चाधिष्ठित परिरक्षितम ॥१९--२०॥

तेषु तेष्विति लीलादिषु । द्विजोत्तमा इत्यत्र पूर्वभोगत्वात् नारदेव प्रीता ॥२१—२२॥

शिष्यैर्भरतसुतै ॥२३॥

कोहलादिभिरेव तु वत्सशाण्डिल्यधूर्तिलैः ।
मर्त्यधर्मक्रियायुक्तं कश्चित्कालमवस्थितं[1] ॥२४॥

एतच्छास्त्रं प्रणीतं हि नराणां बुद्धिवर्धनम् ।
त्रैलोक्यस्य क्रियोपेतं सर्वशास्त्रनिदर्शनम् ।
मङ्गल्यं ललितं चैव ब्रह्मणो वदनोद्भवम् ॥२५॥
य इदं शृणुयान् नित्यं प्रोक्तं चेदं स्वयम्भुवा ।
कुर्यात् प्रयोगं यश्चैवमथवाऽधीतवान् नरः ॥२६॥
या गतिर्वेदविदुषां या गतिर्यज्ञकारिणाम् ।
या गतिर्दानशीलानां तां गतिं प्राप्नुयाद्धि सः ॥२७॥
दानधर्मेषु सर्वेषु कीर्त्यते तु महत् फलम् ।
प्रेक्षणीयप्रदानं हि सर्वदानेषु शस्यते ॥२८॥
न तथा गन्धमाल्येन देवास्तुष्यन्ति पूजिताः ।
यथा नाट्यप्रयोगस्थैर्नित्यं तुष्यन्ति मङ्गलैः ॥२९॥
गान्धर्वं चेह नाट्यं च यः सम्यक् परि(श्यग्नु)पालयेत् ।
स ईश्वरगणेशानां लभते सद्गतिं पराम् ॥३०॥
एवं नाट्यप्रयोगे बहुविधिविहितं कर्मशास्त्रं प्रणीतं ।
नोक्तं यच्चात्र लोकादनुकृतिकरणात् । संविभाव्य तु तज्ज्ञैः ॥
किं चान्यत् सम्प्रपूर्णा भवतु वसुमती नष्टदुर्भिक्षरोगा ।
शान्तिर्गोब्राह्मणानां भवतु नरपतिः पातु पृथ्वीं समग्राम् ॥३१॥

[इति भरतीये नाट्यशास्त्रे गुह्यतत्त्वकथनाध्यायः सप्तत्रिंशः ॥]

नाट्यशास्त्रम् सपूर्णम् ॥

---

कोहलादिभिरिति । तत्प्रधानैः सर्वशास्त्रनिबन्धनदर्शनैर्मितिहासपुराणार्थवादकार्यचित्रपुस्तलेपादिभिः ॥२४॥

सर्वं नाट्यव्याख्या सर्वत्र रसप्राधान्यात् साक्षात्कारकल्पबुद्धिसम्पादनात् प्राव(वी)ण्याच्च । यथोक्तं ते विहितैर्णामित्यादि । सन्तो(तो)बुद्धिविषयान् प्रकाशयन्तीति ॥२५॥२६—२९॥

गान्धर्वमिति । नृत्यं नाट्यं योऽनुपालयेत् । उपदेशव्याख्यानविवरणादिना च । ईश्वरगणेशता(शाना)लभन्ते(ते) सद्गतिं परामिति शिवसायुज्यम् ॥३०॥

अनुयायिताकरणमनुकृतिः नरपतिरिति । पुरुषोत्तमः ईश्वरः सकलजगत्पालयिता । इति शिवम् ॥३१॥

---

1. NS किं चेच्छानमवस्थितं ।

श्रीमध्यदेशभवविप्रवराभिगुप्त-
वशोदित शिवपदार्पितचित्तवृत्ति ॥

(सङ्गीत) रागनयशृङ्खल (सु) प्रसिद्धो
वशोद्भवस्थितिवशान्नृसिंहगुप्त ॥१॥

तस्यात्मजोऽभिनवगुप्तपदाभिधानो
भट्टेन्दुराजपदपांसुपवित्रमूर्ति ॥

सद्विप्रतातवदनादधिगम्य नाट्य-
वेद व्यधत्त विवृतिं लघुमर्थपूर्णाम् ॥२॥

शिवपुरविजयहेतुविजयादिकरुद्रसहस्रपूतया
प्रवरपुराभिधानकाश्मीरकधाम्नि शुभे वितस्तया ॥

अधिगतजन्मवसतिस्मृनकरशेखरभक्तिभक्तिनो
रचयति नाट्यवेदविवृतिं लघुमभिनवगुप्तभारतीम् ॥३॥

प्रभु शम्भुर्यस्य प्रथितपरमार्थस्थितिसुख
पराधीनश्चेतो व्यधित स तदाराजं(ध)नविधौ ॥

तत शान्तस्वान्तरहृदयविश्रान्तिकृतिन
कृतिं तस्येत्थं भो शृणुत भगवन्त सहृदया ॥४॥

सज्जनान् कविरसौ न याचते
ह्लादनाय शशभृन् किमर्थित ॥

नापि निन्दति स्वलान् मुहुर्मुहु-
र्धिक्कृतोऽपि न हि शीतलोऽनल ॥५॥

नाट्यार्थप्रथनात् तस्मात् तुष्ट(ष्टा) नाट्ये परेण यत् ।
क्रियात् तेनैष जननामानन्दोल्लाससुन्दराम् ॥६॥

इति महामाहेश्वराभिनवगुप्ताचार्यविरचिताया नाट्यवेदवृत्ता-
वभिनवभारत्या गुह्यतत्त्वकथन सप्तत्रिंश ॥

॥समाप्ता चेयमभिनवगुप्तकृति ॥

# APPENDIX I

## Index of half verses of the Natyasastra, Vol. IV